श्रीरस्तु ।

॥ श्रीहस्तिशैलशिखरोज्वलपारिजाताय नमः ॥

श्रीमते हयग्रीवाय नमः ।

श्रीमते रामानुजाय नमः ।

श्रीमद्वरवरमुनये नमः ।

श्रीवादिभीकरमहागुरवे नमः ।

श्रीकाञ्चीप्रतिवादिभयङ्कर-अण्णङ्गराचार्यविरचितायां

# चतुश्शास्त्रसारसुधायाम्

## तर्कशास्त्रसर्वस्वं नाम

### प्रथमा लहरी ।

❀ मङ्गळाचरणम् । ❀

करिगिरिशिखरकुटुम्बी नरहरिशिरसि स्फुरन्महाकुम्भी ।
कमलाधररसचुम्बी कलयतु कुशलं सतां हृदालम्बी ॥

❀ आचार्यध्यानम् । ❀

यत्पादाम्बुजयुग्मरेणुपरमाण्वाराधनोत्कण्ठया
दासोऽप्येष पदार्थकोटिघटनासौभाग्यसीमामगात् ।
श्रीमद्वादिभयङ्करान्वयविधुः ख्यातो जगद्देशिकः
सर्वज्ञोऽयमनन्तसूरिरनिशं जागर्तु चित्ते मम ॥

## ग्रन्थावतरणिका । ❀

तर्कव्याकृतिपूर्वतन्त्रनिगमान्ताख्यानि शास्त्राणि या-
न्यम्भोराशिवदुल्लसन्ति विदुषामानन्दसम्पत्तये ।
तेषां सारतमार्थरत्ननिकरान् गीर्वाणवाणीविद-
स्सर्वे स्वे हृदि धारयन्त्विति धिया ग्रन्थोयमारभ्यते ॥

शास्त्रे न क्वापि किञ्चित्त्वपि च परिचयं मन्दधीरेष दासो
धत्ते यद्यप्यथापि त्रिभुवनतिलकैरस्मदाचार्यवर्यैः ।
प्रेमार्द्रापाङ्गवीक्षां प्रचुरकरुणया लम्भितस्सावलेपो
निर्भीकस्साहसेऽस्मिन् विबुधजनपरीहासपात्रे प्रवृत्तः ॥

जगद्गुर्वनन्तार्यवर्याङ्घ्रिपद्मद्वयीनित्यसेवासुधास्वादधन्यः ।
जनः कश्चिदण्णङ्गराचार्यनामाचतुश्शास्त्रसारामृतं निर्मिमीते ॥

एकैकञ्चापि शास्त्रं दुरधिगमतमैरर्थवर्गैरनन्तै-
रापूर्णं भाति यद्यप्यथ च मृदुधियां दुस्सहाऽतिश्रमाणाम् ।
तत्तत्सारांशमात्रग्रहणकुतुकिनां बालिशानां पटूनां
ग्रन्थोऽयं साधु कुर्यादुपकृतिमतुलामित्युशन्त्यार्यवर्याः ॥

## ❀ ग्रन्थोपक्रमः । ❀

रामकृष्णाभिधाभाजोर्मित्रयोरुभयोर्मिथः ।
संवादरूपतस्तर्कशास्त्रसारः प्रकाश्यते ॥
तत्र रामस्तु जिज्ञासुः कृष्णो बोधयिता पटुः ।
एनयोर्भाषणव्याजाच्छास्त्रार्थो लघु बोध्यते ॥

रामः—सखे कृष्ण! चिरन्तनैर्महामुनिभिः परमकरुणया दर्शनषट्कं सङ्कलितमिति श्रुतं मया कदाचित् ; नामावलीं तस्य श्रोतुमिच्छामि सम्प्रति त्वत्तः । प्रथितो हि भवान् विदितवेदितव्य इति ।

कृष्णः—सखे ! अल्पज्ञ एवाहम् ; तथापि वच्मि शृणु । सांख्ययोगौ पूर्वोत्तरमीमांसे, न्यायवैशेषिके चेति सन्ति नाम दर्शनानि षट् ।

रामः—तर्कशास्त्रमिति यदिदानीं व्यवह्रियते, तदिदं दर्शनषट्कान्तर्गतं न भवति वा ?

कृष्णः—अन्तर्गतमेव । 'न्यायवैशेषिके' इत्युक्तं खलु मया ; तत्र न्यायस्य प्रणेता तत्रभवान् गौतमो महर्षिः । भगवान् कणादस्तु वैशेषिकस्य प्रतिष्ठापकः । तयोस्सिद्धान्तानंशतः परिगृह्य अर्वाचीना विचक्षणमणयः कमपि नवीनं ग्रन्थसमुदायमारचयामासुः । स एव समुदायस्साम्प्रतिकैस्तर्कशास्त्रमिति व्यपदिश्यते ।

रामः—अर्वाचीनैः प्रणीताः के के ग्रन्थाः ? कति च सन्ति ?

कृष्णः—मणिदीधितिप्रभृतयो महाप्रौढग्रन्थाः कारिकावली प्रभृतयश्च प्रकरणग्रन्थाः काममुल्लसन्ति परस्सहस्रम् ।

रामः—तर्कशास्त्रमर्यादां संक्षेपेण जिज्ञासमानस्य मम तेषु ग्रन्थेषु प्रवेशस्सुललितो भवेद्वा ?

कृष्णः—सखे! त्वया तु किञ्चिदेवाधीता संस्कृतवाणी ; ते खलु ग्रन्थाश्शास्त्रीयसङ्केतबहुला इति त्वादृशानां परिमितप्रज्ञानां न तेषु प्रवेशस्सुललितो भवितुमर्हतीति मे मतिः ।

रामः—भवांस्तर्कशास्त्रे निपुणतम इति बहवः कथयन्ति । बोधनाशक्तिश्च भवतो विस्मयनीया प्रथते । ग्रन्थैर्न कश्चिदुपकारो मम भवितेति सत्यमेतत् । सुगमया सरण्या तर्कशास्त्रसारांशान्मह्यं प्रतिपादयितुं प्रभवति वा भवान् ? मनागिव दयस्व भोः !

कृष्णः—अस्तु । विजहीहि वृथा मम प्रशंसाम् । यथाशक्ति प्रतिपादयितुं बलवानेवास्ति ममोत्साहः । प्रतिपादयिष्ये ।

रामः—एतत्तु मम प्रथमतो जिज्ञासितम् ; तर्कशास्त्रस्य किन्नाम प्रयोजनमिति । प्रयोजनाकांक्षा हि सर्वत्र प्राथमिकी ।

कृष्णः—भारतीयान्यन्यान्यानि शास्त्राणीव तर्कशास्त्रमपि परमपुरुषार्थप्राप्तिमेव स्वप्रयोजनत्वेन प्रतिपादयतीति ममाध्यवसायः. तार्किकैस्तावन्मोक्षपदार्थस्सर्वविधदुःखध्वंसात्मको निरुच्यते । आत्मन इतरभिन्नत्वज्ञानेन जायते सर्वदुःखानामुद्ध्वंस इति ते मन्यन्ते । तादृशमितरभेदज्ञानमितरवस्तूनां ज्ञानमपेक्षते—इति सकलपदार्थज्ञानं मोक्षोपयोगि सम्पद्यते । अतस्सकलपदार्थानां लक्षणादिपुरस्कारेण ज्ञानमुत्पादयितुं तर्कशास्त्रं प्रवर्तत इति विद्धि ।

रामः—किं सर्वाण्यपि पदार्थजातानि विभजनलक्षणादिपुरस्कारेण तर्कग्रन्थेषु निरूपितानि?.

कृष्णः—अथकिम् । सर्वाण्यपि पदार्थजातानि विभजनलक्षणादिपुरस्कारेण तर्कग्रन्थेषु निरूपितानि सन्ति । तत्सिद्धान्तानामेव लघीयसोपायेनाऽवबोधनं सम्प्रति मया चिकीर्षितं त्वत्प्रार्थनया ।

रामः—यदिदानीं भवद्भिरुपदिष्टं भविष्यति, तत्र किमधिकारिनियतिरस्ति तथा ? यथा हि व्याकरणमीमांसादौ ।

कृष्णः—तार्किकास्तु पदार्थतत्त्वजिज्ञासून् सर्वानपि जनान् शास्त्राध्ययनेऽधिकारित्वेन स्वयमभ्युपगच्छन्ति । न तत्र वर्णाश्रमादिसम्पदमपि योग्यतापादिनीमभिप्रयन्तीति किमपि तेषां कारुणिकत्वमेतत् । अतो भाविन्यस्मिन्मदुपदेशेपि काममनुमन्यते जिज्ञासूनामखिलानामप्यनर्गलः श्रवणाधिकारः ।

रामः—महान् सन्तोषः । आरभ्यता मुपदेशः, अवहित आकर्णयामि भोः!.

कृष्णः—चराचरात्मकमिदमखिलं जगत् सप्तभिः पदार्थैस्सङ्कलितमिति तर्कसिद्धान्तः । तेषु सप्तसु पदार्थेष्वनन्तर्भूतं न किमपि वस्तु लोके वर्तते ।

रामः—के नाम ते सप्त पदार्थाः ?

कृष्णः—द्रव्यगुणकर्मसामान्यविशेषसमवायाभावसंज्ञकास्ते । एतेषु प्रथमे षट् भावपदार्थाः, चरमःपुनरभावपदार्थ इति सुवचम् ।

रामः—भावपदार्थापेक्षया अभावपदार्थस्य को विशेषः ?

कृष्णः—भावपदार्थानां प्रायशोऽनन्यापेक्षा सत्ता विद्यते ; अभावस्तु सर्वदैव वस्त्वन्तरसापेक्षः । न ह्यभावइत्येव कश्चिदस्तीत्यस्माकमनुभवोस्ति । किन्तु, जलस्याभावः, प्रकाशस्याभाव इत्यादिरीत्या यस्यकस्यापि भाववस्तुनोऽभाव एवास्माकमनुभवगोचरो भवति । भावपदार्थेषु च प्राकृतजनानामनुभवाविषयाः शास्त्रवासनामात्रसंवेद्यास्सन्ति कतिपये पदार्थाः । येषु प्राथम्यमर्हति विशेषनामा पदार्थः । स हि नित्येषु द्रव्येषु वर्तत इति तार्किकाः प्रतिजानन्ति । द्रव्येषु तावत् पृथिवीजलादीनि, गुणेषु च रूपरसादीनि, कर्माणि सर्वाणि च पामराणामप्यनुभवविषयतामापन्नानीति सुबोधमेव तेषां स्वरूपम् । सामान्यं तु सदृशप्रतीति विषयेषु बहुषु वस्तुषु विद्यमानस्साधारणो धर्मः; यथा बह्वीषु गोव्यक्तिषु विद्यमानं ‘ गोत्वं ’ सामान्यमिति व्यपदिश्यते । एवं द्रव्यत्वं गुणत्वं घटत्वं पटत्वमित्यादिकमपि सामान्यान्तर्भूतमेव ।

रामः—समवाय इति कश्चित्पदार्थ उक्तः खलु, तस्य स्वरूपं किन्नाम ?

कृष्णः—यावत् स्वस्य विनाशः तावत्कालमेव द्रव्यादिव्यक्तिकामप्याश्रित्य वर्तमानानां गुणकर्मादीनां द्रव्यादिषु यस्सम्बन्धः

स समवाय इति संशब्द्यते । यथा—रूपं यावदात्मविनाशं स्वोत्पत्त्यधिकरणमेव घटादिकमाश्रित्य वर्तते । न तु ततः काकादिरिव देशान्तरं गन्तुं शक्नोतीति तादृशां वस्तूनां सम्बन्धः समवाय इति सङ्कीर्त्यते । द्रव्येषु गुणकर्मणी समवायेन वर्तेते । एवं द्रव्यत्वगुणत्वादिकं सामान्यं द्रव्यगुणादिषु सर्वदैव वर्तत इति तयोरपि सम्बन्धः समवायः । तन्तुप्रभृतिष्ववयवेषु पटादीनामवयविनां सम्बन्धोपि समवाय एवेति समवायस्वरूपम् ।

रामः—उक्तान् सप्त पदार्थान् विना किमन्यः कोपि पदार्थो जगति नास्ति ?

कृष्णः—एवमेतैस्सप्तभिरेव पदार्थैः संघटितमिदं प्रपञ्चसर्वस्वमाकलयन्ति तार्किकाः । एषाञ्च पदार्थानामेकैकस्य लक्षणप्रदर्शने तन्निर्वचने च ते महान्तमातिष्ठन्ते प्रयाससन्दोहम् ।

रामः—लक्षणं नाम किम् ?

कृष्णः—अत्रोत्तरमेवमाचक्षते नैयायिकाः—“ दूषणत्रितयरहितो धर्मो लक्षणम् । ”

रामः—कानि नाम तानि दूषणानि त्रीणि ?

कृष्णः—सन्ति लक्षणदूषणानि त्रीणि अतिव्याप्त्यव्याप्त्यसम्भवसंज्ञकानि । तैरकलङ्कित एव धर्मो लक्षणं भवितुमर्हति ।

रामः—अतिव्याप्त्यादीनां त्रयाणामेषां स्वरूपं जिज्ञासे ।

कृष्णः—अलक्ष्ये लक्षणस्य दर्शने अतिव्याप्तिर्नाम दोषः ।

रामः—अलक्ष्यं नाम किम् ?

कृष्णः—यस्य लक्षणं विवक्षितम्, तल्लक्ष्यम् । तद्भिन्नमलक्ष्यम् । गोर्लक्षणे विवक्षिते गौर्लक्ष्यम्, तद्भिन्नमश्वमहिषादिकमलक्ष्यमिति विद्धि ।

रामः—अतिव्याप्तिदोषस्य किमप्युदाहरणं प्रदर्शय ।

कृष्णः—गोः शृङ्गित्वं लक्षणमित्युक्ते अत्रातिव्याप्तिस्सम्भवति । शृङ्गित्वं लक्ष्यभूतगोभिन्ने छागमहिषादावपि दृश्यत इति ।

रामः—लाङ्गूलवत्त्वं वानरस्य लक्षणमित्युक्तिस्थलेऽप्यतिव्याप्तिदोषो भवितुमर्हत्येव खलु ?

कृष्णः—आम्; गृहीतोऽयं विषयो भवता ।

रामः—अथ अव्याप्तिं लक्षय ।

कृष्णः—लक्ष्यघटकेषु केषुचित् लक्षणस्य सत्त्वं केषुचिदसत्त्वं च भवतिचेत् अव्याप्तिर्लक्षणदोषः । यथा गोर्नीलरूपवत्त्वं लक्षणमुक्तञ्चेत् तदव्याप्तिदुष्टं भवति । नीलरूपं हि नीलास्वेव गोव्यक्तिषु विद्यते, न तु रक्तासु कपिलासु वेति कतिपयगोमात्रवृत्तितया नीलरूपमव्याप्तम् ।

रामः—अतिव्याप्त्यव्याप्त्योः स्वरूपं भवता प्रदर्शितम्; ज्ञातञ्च सम्यगेव मया । असम्भवस्य स्वरूपं त्वहमेव स्वबुद्ध्याऽवधार्य वच्मि, शृणु । कुत्रापि लक्ष्ये लक्षणस्याऽविद्यमानत्वमसम्भव इति मन्ये; युज्यते वा ?

कृष्णः—आम्, तथैव । उदाहरणं प्रदर्शय तावत् ।

रामः—शफवत्त्वं मनुष्यस्य लक्षणम्, वह्नेश्शिशिरत्वमित्यादौ ।

कृष्णः—बुद्धिमानसि, एतादृशदोषत्रयरहितस्तु धर्मो लक्षणं भवतीति निष्पन्नम् । तादृशं किमपि लक्षणं प्रदर्शयितुं प्रभवसि वा त्वम् ?

रामः—न स्फुरति, प्रदर्शयतु भवानेव ।

कृष्णः—गोः सास्नावत्त्वं लक्षणम् । सास्ना नाम गले लम्बमानो मांसपिण्डविशेषः; स गोष्वेव दृश्यते, नान्येषु जन्तुषु । अतो न तस्यातिव्याप्तिः । अस्ति च सास्ना सर्वास्वपि च गोव्यक्तिष्विति न वा तस्याऽव्याप्त्यसम्भवौ । एतादृश एव धर्मः स्थलान्तरेष्वपि लक्षणतया व्यवह्रियत इति संक्षेपः ।

रामः—सखे कृष्ण ! नैयायिकानां मते द्रव्याणि कियन्ति ? कानि च तानि ?

कृष्णः—द्रव्याणि तावन्नवधा विभज्यन्ते नैयायिकैः—पृथिवी जलं तेजः वायुः आकाशं कालः दिक् आत्मा मनश्च द्रव्याणि । "क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः । द्रव्याणि" इति कारिकां च विद्धि ।

रामः—प्रियवयस्य ! इमानि द्रव्याण्यधिकृत्य समासतो यद्वक्तव्यं तद्भवतैव निगद्यताम् । विशिष्यविशिष्य प्रष्टुमपि न शक्नोमि खल्वहम् ।

कृष्णः—शृणुतावदवहितः । यद्यद्गन्धविशिष्टमुपलभ्यते तत्सर्वं पृथिवीति कथ्यते । अतो मनुष्यशरीरादीनामपि पृथिव्यामन्तर्भावः । जलं प्रसिद्धमेव । उष्णस्पर्शवन्ति वह्निसूर्यप्रमुखानि तेजांसि गण्यन्ते । शब्दस्याश्रयभूतमाकाशं नाम द्रव्यमिन्द्रियाऽगोचरोऽप्यनुमानगम्यं किमप्यस्तीत्यामनन्ति नैयायिकाः । तदेवात्राकाशमिति परिगणितम् । तच्च सर्वत्र व्याप्नोति । न तु पामरैर्व्यव ह्रियमाणो नीलरूप इव चालक्ष्यमाणः कटाहाकृतिराकाशपदार्थश्शास्त्रकृतामाकाशव्यपदेशभाजनम् । 'अस्मिन् काले इदमुत्पद्यते' इति, 'अस्यां दिशि इदं वर्तते' इति च व्यवहारविषयभूते कालदि-

मभिधाने वस्तुनी सर्वत्र विद्येते इति, व्यवहारात्तयोस्सिद्धिमभिप्र- यन्ति । अहमिति सर्वैरनुभूयमानो व्यवह्रियमाणश्च पदार्थ आत्मे- त्युच्यते । स च ज्ञानादीनामधिकरणं भवति ।

रामः—सखे ! मध्ये काचिदाशङ्का । ज्ञानादीनामित्यत्र आदिपदग्राह्याणि कानि ?

कृष्णः—आदिशब्देन सुखदुःखेच्छाद्वेषधर्माधर्मसंस्कारा उपादेयाः ।

रामः—साधु । उपरि निगद्यताम् ।

कृष्णः—आत्मनि च न सर्वदा ज्ञानादिकं जायते । न हि सुषुप्तिकाले कोपि किमपि जानाति । एवंविधस्य ज्ञानानुत्पादस्य कारणं स्थलविशेषे मनस्सान्निध्यविरह एवेति वक्तव्यम् । अतो मनो नाम किमपि द्रव्यं युक्तिभिरेव स्थापयितुं शक्यम् ।

रामः—स्थलविशेषे मनस्सान्निध्यविरह इति यदभिहितमधुना, तन्मनागिव प्रपञ्चयतामिति प्रार्थये ।

कृष्णः—पुरीतन्नामकनाडीभिन्नप्रदेशे मनसा आत्मनस्संयोगो ज्ञानकारणम् । सुषुप्तिदशायां मनः पुरीतति प्रविशतीत्याहुः ।

रामः—श्रुतचरमिदं मयापि । उपरि वद ।

कृष्णः—एषु च द्रव्येषु प्रथमानि पञ्च भूतपदेनाभिधीयन्ते ।

रामः—जानामि तावत् पञ्चभूतानीति प्रथमानं व्यवहारम् । मूर्तद्रव्याणीति व्यवहारः केषाम् ?

कृष्णः—प्रथमे चत्वारो मनश्चेत्येतत्पञ्चकं मूर्तद्रव्यमिति व्य- वह्रियते ।

रामः—अन्ये आकाशकालदिगात्मानः कीदृशाः ?

कृष्णः—ते तु विभवः । यस्सर्वत्र व्याप्यावतिष्ठते स विभुः ।

रामः —द्रव्येषु कानि कानि नित्यानि ?

कृष्णः—आकाशकालदिगात्ममनांसि पञ्चैतानि नित्यानीति नैयायिकानां सिद्धान्तः। नित्यत्वं नाम किम् ? जानासि वा ?

रामः—येषामुत्पत्तिर्विनाशश्च न विद्यते, ते नित्या उच्यन्त इति मन्यमानोसि। युक्तमेव खल्वेतत्।

कृष्णः—आम्, तथैव।

रामः—आकाशादिपञ्चकस्य नित्यत्वकथनेन पृथिव्यादिपञ्चकस्यानित्यत्वं कथितं भवति खलु।

कृष्णः—पृथिव्यादिचतुष्टयस्योत्पत्तिविनाशावनुभवेनैव गम्येते किल। तथापि पृथिव्यादीनामादिकारणभूताः परमाणवो नाम सूक्ष्मपदार्था उत्पत्तिविनाशरहिततया नित्या इति तार्किकैरभ्युपगतम्। प्रलयसमयेपि परमाणूनां नास्ति विनाशः। परमाणूनामनेकेषां संयोगवशात् स्थूलानि पृथिव्यादीन्युत्पद्यन्ते। विनाशे च तानि परमाणुं मर्यादीकृत्यैव विनश्यन्तीति संक्षेपः।

रामः—द्रव्याणां पदार्थेषु प्राथम्यं कुतस्समजनि ?

कृष्णः—गुणादीनामितरेषां षण्णामप्याश्रयभूतानि द्रव्याणि खलु। अतस्तेषां प्राथम्यं युक्तमेव ननु।

रामः—युक्तमेतत्। गुणादीनां तु न सकलपदार्थान्तराश्रयत्वम्; गुणे हि न द्रव्यं वर्तते, न वा गुणो नापि वा कर्म। एवं कर्मापि न द्रव्यगुणयोराधारतां भजति। द्रव्यं तु सर्वस्यान्यस्य पदार्थजातस्याऽऽधारभूतमिति सुतरामुपपद्यते तस्य प्राथम्यम्।

कृष्णः—एवमेवाऽन्येषामपि भावपदार्थानां पूर्वपूर्वं प्रधानमिति वक्तुं शक्यते। गुणकर्मणोर्यद्यपि द्रव्याश्रितत्वस्य सामान्याश्रयत्वस्य चाऽविशिष्टता, तथापि संख्याकृतं बहुत्वमस्तीति गुणस्य

प्राथम्यं सूपपादम् । किञ्च सर्वाणि कर्माणि कतिपयक्षणमात्रस्थायीनि, गुणास्तु चिरकालस्थायिनः । कतिचन पुनः नित्याश्चेत्यपरमिदं गुणप्राथम्ये कारणम् । सामान्यं सकलद्रव्येषु गुणकर्मणोश्च वर्तते ; विशेषस्तु कतिपयद्रव्यमात्रवृत्तिरिति सामान्यस्य प्राथम्यम्। द्रव्यगुणकर्मसामान्यविशेषाः पञ्चापि सम्बन्धिशब्दभाजः । समवायस्तु तेषां केवलं सम्बन्धभूत इति तस्य चरमत्वं चेति विभावय ।

रामः—अथ गुणविषये वक्तव्यं वद सखे ! ।

कृष्णः—गुणास्तावद्रूपादयश्चतुर्विंशतिरिति तार्किका मन्यन्ते। " ........अथ गुणा रूपं रसो गन्धस्ततःपरम् । स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् । संयोगश्च विभागश्च परत्वं चाऽपरत्वकम् । बुद्धिस्सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् । द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ " इति कारिकावलीं चिन्तय। ( अत्र, परिमितिः—परिमाणम् । अदृष्टम्—धर्माऽधर्मौ । )

रामः—एतान् गुणानधिकृत्य पृथक्पृथग्वक्तव्यानंशानपि कृपया वक्तु भवान् ।

कृष्णः— शृणु । यच्चक्षुषा गृह्यते, यच्च वर्णपदेन लोके व्यवह्रियते, तत् शुक्लादिभेदभिन्नं रूपम् । रसो मधुरादिः । गन्धस्पर्शौ प्रसिद्धावेव । संख्या एकत्वद्वित्वादिः । अणुत्वं महत्त्वमित्यादि परिमाणम् । अयमस्मात् पृथगिति व्यवहारनिमित्तं पृथक्त्वं नाम गुणमपि तार्किका ऊरीकुर्वन्ति ।

रामः—अयं व्यवहारो भेदरूपेणाऽन्योन्याभावेनैव किं न निर्वहेत् ?

कृष्णः—निर्वहेदिति पक्षान्तरमप्यस्ति ।

रामः—कथय तावदुपरिष्टात् ।

कृष्णः—संयोगविभागौ प्रसिद्धावेव। परत्वापरत्वे पुनः क्वचिद्दूरत्वसामीप्यरूपे भवतः। (देशकृतपरत्वापरत्वे दूरत्वसामीप्यपर्यवसायिनी।) यथा—काञ्चीपुरापेक्षया पाण्ड्यमण्डलं केरळेभ्योऽपरमिति व्यवहारे अपरत्वं सामीप्यरूपम्। पाण्ड्यमण्डलापेक्षया काञ्चीपुरस्य परत्वं दूरत्वातिरेकलक्षणमेव। एवं कालकृतपरत्वापरत्वे ज्येष्ठत्वकनिष्ठत्वलक्षणे सम्पद्येते। बुद्धिप्रभृतयः प्रयत्नान्ताः प्रसिद्धा एव। पतनहेतुर्गुरुत्वम्। स्रवणहेतुर्द्रवत्वम्। विशीर्णस्य वस्त्वन्तरस्य पिण्डीभावं जनयति यो गुणः, सः स्नेहशब्देनोच्यते। संस्कारो नाम अनुभवादुत्पद्यमानः कालान्तरे स्मरणायोपकुर्वाणश्च गुणः। स चात्मनि वर्तते। इदानीं दृश्यमानं श्रूयमाणं वा किञ्चन वस्तु कमपि संस्कारमात्मनि जनयति; स कालान्तरे तस्य स्मरणंप्रति सहकारी सम्पद्यते। अदृष्टमिति धर्माधर्मयोस्साधारणी संज्ञा।

रामः—तयोः प्रत्यक्षाऽविषयत्वादन्वर्थैव सेयं संज्ञा।

कृष्णः—आम्। धर्मस्यैव पुण्यमिति नामान्तरम्। अधर्मस्य पापमिति च। तत्र धर्मः शास्त्रविहितकर्मानुष्ठानेन गङ्गास्नानादिना जायते। अधर्मो निषिद्धकर्माचरणेन सुरापानादिना जायते। अथ, शब्दः प्रसिद्ध एव।

रामः—एवमेष गुणानां स्वभावः संक्षेपत उक्तः प्रियवयस्येन श्रीमता। सर्वे चैते द्रव्यमात्रवृत्तयो वा?

कृष्णः—आम्; तथैव। गुणानां च द्रव्ये समवायसम्बन्धेन वर्तनमिति प्रस्तुतचरमेतत्।

रामः—किमेते गुणास्सर्वे सर्वद्रव्यवृत्तयो भवन्ति?

कृष्णः—शृणु, विविच्य वच्मि । संख्यापरिमाणपृथक्त्व-संयोगविभागास्सर्वद्रव्यवृत्तयः । परत्वापरत्वे मूर्तद्रव्येषु सकलेषु वर्तेते । न तु विभुद्रव्येषु । तेषां सकलदेशकालव्यापितया तत्र तद्व्यवहाराऽसम्भवात् । रूपं पृथिव्यादित्रयवृत्ति । रसः पृथिवीजलवृत्तिः । ( जलस्य मधुरो रस इति तार्किकाः । ) गन्धः पृथिव्यामेव । स्पर्शः पृथिव्यादिषु चतुर्षु वर्तते । गुरुत्वं पृथिवीजलतेजस्सु तिष्ठति । सुवर्णं तेजस्यन्तर्भवतीति तार्किकास्सिद्धान्तयन्ति । तत्र च गुरुत्वमुपलक्ष्यते इति गुरुत्वस्य तेजोवृत्तिता । द्रवत्वं पृथिवीजलवृत्ति । घृताद्यात्मके पार्थिववस्तुनि वह्निसंयोगादिना द्रवत्वोपलब्धेस्तत्रापि पृथिव्यां द्रवत्वं स्वीक्रियते । परं तु, तन्नैमित्तिकमिति व्यवह्रियते । जले वर्तमानं द्रवत्वं परं स्वभावसिद्धत्वात् सांसिद्धिकमुच्यते । स्नेहो जलमात्रस्य गुणः । शब्द आकाशस्य । बुद्ध्यादयः प्रयत्नान्तास्संस्कारश्चात्मवृत्तयः ।

रामः—गुणानां नित्यत्वानित्यत्वविवेचनं विधेहि सखे !

कृष्णः—तत् उपरिष्टाद्विधास्यते । इदानीं कर्मविषये वक्तव्यं मन्ये ।

रामः—अस्तु तथैव । द्रव्यगुणविषये ज्ञातं ज्ञातव्यं यथोचितम् । कर्मविषयिणी जिज्ञासा समुत्थापिता सुहृदा । चलनात्मकस्सर्वोऽपि व्यापारस्तार्किकैः कर्मेति कथ्यत इति तावदवगतचरं मम । तस्यावान्तरभेदास्सन्ति किम् ।

कृष्णः—सन्त्येव तस्यावान्तरभेदा उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानीति पञ्च । “ उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा। प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ” इति हि कारिका ।

रामः—एतेषां कर्मभेदानां-कोऽर्थः ?

कृष्णः—उत्क्षेपणम्—ऊर्ध्वं नयनम् । अवक्षेपणं तद्विपरीतम् । अधोनयनमितियावत् । प्रसारणं विततनम् । आकुञ्चनं तद्विरुद्धं कर्म । गमनं प्रसिद्धमेव ।

रामः—एतेभ्योऽन्यानि कर्माणि न सन्तीति किं सुवचम् ? भ्रमणस्पन्दनादीनि बहूनि कर्माणि सन्त्येव खलु । तत् कथं पञ्चेति नियम्यते ?

कृष्णः—सत्यमेतत् ; तथापि तानि सर्वाणि गमनशब्देन गृह्यन्त इति मुनिकृतस्य विभजनस्य कथञ्चिदुपपत्तिः कल्पनीया । " भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च । तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ " इति कारिका चात्राऽनुसन्धेया ।

रामः—सन्तोषः । अनयैव रीत्या किमित्युत्क्षेपणादीनामपि गमनेऽन्तर्भावो न क्रियते ?

कृष्णः—एवं पर्यनुयोक्तुं न वयं प्रभविष्णवः । मुनीनां स्वतन्त्रेच्छतया नियोगपर्यनुयोगानर्हत्वादिति च विचक्षणा आचक्षते ।

रामः—अस्तु नाम तत् ; उपरि वक्तव्यं वदतु तत्रभवान् ।

कृष्णः—कर्मणोप्याधारो द्रव्यमेव । द्रव्ये कर्म समवायसम्बन्धेन वर्तते । द्रव्येषु च मूर्तेष्वेव कर्माऽङ्गीक्रियते । न तु विभुष्वाकाशकालदिगात्मसु ।

रामः—कर्म क्रियेति पर्याय एव खलु ।

कृष्णः—अथकिम् । पर्याय एव । अत एव क्रियावत्त्वं मूर्तद्रव्याणां लक्षणमिति च वदन्ति ।

रामः—कृतिशब्दोपि कर्मपर्याय एव खलु ।

कृष्णः—न न । कृञ्धातोर्निष्पन्नोपि कृतिशब्दो नैयायिकैः प्रयत्नसमानार्थकतया प्रयुज्यत इति न तस्य कर्मपर्यायता ।

रामः—क्रियैव संयोगविभागयोः कारणं भवतीति श्रुतं मया । तत्र किञ्चिद्विव्रियतां सुहृदा ।

कृष्णः—सत्यमेव तत् । न हि द्वयोरन्यतरवस्तुनि क्रियां विना तयोस्संयोगविभागौ जायेते । क्वचित्तु मेषद्वयघट्टनादौ द्वयोरपि क्रिया संयोगनिमित्तं भवति । आत्ममनस्संयोगं प्रति मनोवर्तिनी क्रियैव कारणम् । विभुषु क्रियाऽनुत्पत्त्या न विभुद्वयस्य संयोगविभागावुत्पद्येते । सर्वापि क्रिया क्षणचतुष्टयमात्रमवतिष्ठते । क्रियाणामुत्पत्तिविनाशशालित्वान्न तासां नित्यत्वमिति च तार्किकसिद्धान्तः ।

रामः—प्रियवयस्य ! द्रव्यगुणकर्मविषयेष्ववगतमवगन्तव्यमुचितम् । अथेदानीं सामान्यमधिकृत्य जिज्ञासा प्रवर्तते मम ।

कृष्णः—समानावयवसंस्थानासु बह्वीषु व्यक्तिषु समानाकार प्रत्ययस्य कारणं यत्, तदेव सामान्यम् ।

रामः—क्वचन समन्वयः क्रियतांतावत् ।

कृष्णः—निखिलासु गोव्यक्तिषु गोत्वात्मकं सामान्यं विद्यत इत्यत एव ‘ इयं गौः, इयं गौः ’ इति समानाकारः प्रत्ययो जायते । अतश्च—समानावयवसंस्थानासु बह्वीषु गोव्यक्तिषु ‘ इयं गौरियं गौ ’ रिति समानाकारप्रत्ययस्य कारणं गोत्वरूपा जातिरिति सैव सामान्यम् ।

रामः—अनुगताकारः प्रत्यय एव सामान्यस्वीकारे प्रमाणं भवतीति मया गृह्यत इदानीम् । अपीदं युज्यते ?

कृष्णः—युज्यत एव। अत एव खलु एकव्यक्तिमात्रवृत्ती-नामाकाशत्वादीनां न सामान्यमिति व्यपदेशो भवति।

रामः—सामान्यं जातिरिति पर्यायो वा?

कृष्णः—अथकिम्।

रामः—तदिदं सामान्यं केषु केषु पदार्थेषु विद्यते?

कृष्णः— द्रव्यगुणकर्मसु त्रिषु समवायेन वर्तत इति तार्किकाणां सिद्धान्तः। द्रव्यत्वं गुणत्वं कर्मत्वमित्येतेषां जातित्वं नैयायिकसम्मतमेव। एवं पृथिवीत्वं जलत्वं तेजस्त्वमित्यादीन्यपि जातय एव।

रामः—परा अपरा चेति जातिर्द्वेधा निगद्यत इति श्रुतं मया कदाचित्; तत्र किञ्चिद्विवरणं कांक्ष्यते।

कृष्णः—जातिषु या यदपेक्षया न्यूनव्यक्तिवृत्तिः सा तदपेक्षया अपरेत्युच्यते। या यदपेक्षया अधिकव्यक्तिवृत्तिः सा तदपेक्षया परेति च प्रोच्यते।

रामः—विषयोयं मम मनसि नैव लग्नः; सुस्पष्टं प्रतिपादय।

कृष्णः—अवधेहि सखे!। द्रव्यत्वं पृथिवीत्वमिति जातिद्वयं मानसे कलय। अत्र परा जातिः का? अपरा च का? इत्याकांक्षायाम्, द्रव्यत्वजातिः पृथिवीत्वापेक्षया परा; सा हि पृथिवीत्वाधिकरणे पृथिव्यां सर्वत्र विद्यते, तदनधिकरणे जलादौ च विद्यत इति तस्या अधिकव्यक्तिवृत्तिता। एवञ्च द्रव्यत्वजात्यपेक्षया पृथिवीत्वजातिरपरेति समायाति। तस्या न्यूनव्यक्तिवृत्तित्वात्।

रामः—गुणत्वपृथिवीत्वयोर्मध्ये परा जातिः का? ब्रूहि।

कृष्णः—ययोस्तु सामानाधिकरण्यमेव नास्ति न तयोः परस्परं परत्वापरत्वव्यवहारः । गुणत्वपृथिवीत्वयोः द्रव्यत्वरूपत्वयोर्वा सामानाधिकरण्यविरहाच्च तत्र परत्वापरत्वविचारप्रसक्तिरपीत्यवबुद्ध्यस्व ।

रामः—युक्तमेवैतत् । निपुणतरं प्रतिवक्ति भवान् । अस्तु । जातयस्सर्वा नित्या वा ? उत अनित्या वा ?

कृष्णः—जातयस्सर्वा अपि उत्पत्तिविनाशरहिततया नित्या इति गण्यन्ते ।

रामः—कथमेतत् ? व्यक्तीनां विनाशे सति तद्वृत्तिजात्यापि विनष्टयैव खलु भवितव्यम् ।

कृष्णः—नैवम् । व्यक्तीनां विनाशेपि जातिः अनष्टा सती कुत्रचिद्वर्तत एवेति विश्वसनीयम् ।

रामः—अत्र बद्धोऽयमञ्जलिः । उपरिष्टाद्वद वक्तव्यम् ।

कृष्णः—द्रव्यादित्रितयवृत्तिः सत्ता नाम कापि जातिः सर्वजात्यपेक्षया परा विद्यत इति तार्किकाणामभ्युपगमः । सामान्यविषये साम्प्रतमेतावतैवाऽलमवगतेन भवतः ।

रामः—सखे ! इतःपरं विशेषमधिकृत्य खलु वक्तव्यम् ।

कृष्णः—विशेषं विषयीकृत्य यत् प्रस्तोतव्यं तदुपरिष्टात्प्रस्तोष्यते ।

रामः—तर्हि सम्प्रति समवायमधिकृत्य प्रस्तूयतांतावत् ।

कृष्णः—निशमय प्रियवयस्य ! । गुणादीनां द्रव्यादिषु कश्चिदस्ति सम्बन्ध इति काममभ्युपगन्तव्यम् । न खलु सम्बन्धं विना वैशिष्ट्यप्रतीतिरुत्पद्येत । अस्ति च द्रव्यादिषु गुणादिवैशि–

ष्व्यप्रतीतिः । अतो गुणादीनां द्रव्यादिषु सम्बन्धः कश्चिदभ्युपगन्तव्यः । स एव समवाय इत्युच्यते नैयायिकैः ।

रामः—सखे ! ‘ गुणादीनां द्रव्यादिषु ’ इति आदिशब्दघटितव्यवहारं विहाय सुस्पष्टमभिधेहि ।

कृष्णः—तथैवाभिदध्याम् । गुणगुणिनोः, क्रियाक्रियावतोः, अवयवावयविनोः, जातिव्यक्त्योः, विशेषनित्यद्रव्ययोश्च सम्बन्धः समवाय इति तार्किकास्सिद्धान्तयन्तीति विद्धि ।

रामः—“ घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः ॥ ” इति कारिकायामयमर्थो वर्तते वा ?

कृष्णः—वर्तत एव । घटादीनां कपालादौ—अवयवावयविनोः । द्रव्येषु गुणकर्मणोः—गुणगुणिनोः, क्रियाक्रियावतोः। तेषु—द्रव्यगुणकर्मसु । चशब्देन विशेषनित्यद्रव्ययोस्संग्रहः ।

रामः—“ अयुतसिद्धौ ” इति कमपि व्यपदेशं श्रुतचरं स्मरामि । तत्र किञ्चिदुच्यताम् ।

कृष्णः—प्रश्नव्याजेन समयेषु वक्तव्यं सुष्ठु स्मारयसि मेधावी त्वम् । सन्तुष्यामि । शृणु । एतेषां मध्ये एकैकस्य द्वितयस्य ‘ अयुतसिद्धौ ’ इति व्यपदेशो भवति । यथा–गुणगुणिनावयुतसिद्धौ । क्रियाक्रियावन्तौ च तथैव ।

रामः—अयुतसिद्धव्यपदेशनिमित्तं किम् ?

कृष्णः—ययोरन्यतरवस्तु विनाशपर्यन्तमपराश्रितमेव वर्तते तावयुतसिद्धाविति व्यपदिश्येते । गुणो हि यावद्विनाशं द्रव्याश्रित एव वर्तते । अतो द्रव्यगुणावयुतसिद्धौ । क्रियापि यावद्विनाशं द्रव्याश्रितैवाऽवतिष्ठत इति क्रियाक्रियावतोरयुतसिद्धत्वम् । पटादिक-

मवयवि तन्त्वाद्यात्मकमवयवमाश्रित्य यावद्विनाशं वर्तत इति तयो-रयुतसिद्धता । गोत्वादिरूपा जातयो गवाद्यात्मकव्यक्त्याश्रिता एवावतिष्ठन्ते ; व्यक्तिश्च यावद्विनाशं जातिमती वर्तत इति जातिव्यक्त्योरयुतसिद्धता । विशेषाख्यः पदार्थस्सर्वदैव नित्यद्रव्येषु वर्तत इति विशेषनित्यद्रव्ययोरप्ययुतसिद्धभावः ।

रामः—समवायः किमेक एव ? उत बहुः ? रूपसमवायो गन्धसमवाय इति बहुधा खलु व्यपदिश्यते ।

कृष्णः—सत्यम् । एवं बहुधा व्यपदिश्यमानोपि वस्तुत एक एवेति न तस्य नानात्वमभ्युपगम्यते नैयायिकैः । भेदव्यवहारस्तु घटाकाशमठाकाशादिव्यवहारवदुपाधिकृतत्वेन समर्थनीयः। समवाय उत्पत्तिविनाशशून्यो नित्यपादार्थ इति च तार्किकसमयः ।

रामः—समवायविषये अलमेतावता प्रतिपादितेन सम्प्रति । अभावमधिकृत्य प्रोच्यताम् ।

कृष्णः—नेति प्रतीतिविषयः कश्चिदस्ति हि पदार्थः । स तावदभाव इति नाम्ना व्यपदिश्यते ।

रामः—अभावस्य वैविध्यं नास्ति वा ?

कृष्णः—कुतो नास्ति । प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभाव इति स चतुर्धा विभज्यते ।

रामः—संसर्गाभाव इति कश्चिदभावः श्रूयते ; स भवता कुतो नोक्तः ?

कृष्णः—(विहस्य) नायमतिरिक्तः कश्चिदभावः ; आद्यानां त्रयाणामभावानां संसर्गाभाव इति साधारणी संज्ञा । तथा च कारिका—" प्रागभावस्तथा ध्वंसोप्यत्यन्ताभाव एव च । एवं त्रैविध्यमापन्नस्संसर्गाभाव इष्यते ॥ " इति ।

रामः—तथा वा ; अस्तु । एते चत्वारोऽभावा अर्थतो विव्रियन्ताम् ।

कृष्णः—उत्पत्तिशालिनां वस्तूनामुत्पत्तेः पूर्वं प्रतीयमानोऽभावः प्रागभाव इति अन्वर्थया संज्ञया व्यवह्रियते । एवं विनाशिनां पदार्थानां विनाशादनन्तरमनुभूयमानोऽभावः प्रध्वंसाभाव इत्यभिधीयते । ध्वंसो नाश इति पर्यायावेतस्य । 'अत्रेदं नास्ती' ति प्रतीतिविषयोऽभावोऽत्यन्ताभावः । 'गौरश्वो न, घटः पटो न' इत्यादिप्रतीतिविषयोऽभावोऽन्योन्याभावः । अस्यैव 'भेद' इति संज्ञान्तरम् ।

रामः—"अनादिस्सान्तः प्रागभावः ; सादिरनन्तः प्रध्वंसाभावः" इत्यादीनि कानिचन वाक्यानि बाल्ये चिन्तितानि स्मरामि । तेषां सारार्थमभिधेहि ।

कृष्णः निशमय वच्मि । एषु चाभावेषु प्रागभावस्योत्पत्तिर्नास्ति, विनाशो वर्तते । घटोत्पत्तिकाले घटप्रागभावो नश्यति किल । ध्वंसस्योत्पत्तिरस्ति, विनाशो नास्ति । न हि विनष्टं वस्तु पुनरुदेति, येन ध्वंसोऽपि नाम नश्येदिति सम्भावना सम्भविनी । अत्यन्तान्योन्याभावौ तु उत्पत्तिविनाशरहितौ नित्याविति व्यवह्रियेते । अभावस्य तदाश्रयेण सह स्वरूपसम्बन्धाख्यस्सम्बन्धश्च स्वीकृतोऽस्तीति संक्षेपः ।

रामः—सखे ! द्रव्यादीन् पदार्थानधिकृत्य यदवगन्तव्यं तत् प्रायेण मयाऽवगतमासीत्तत्रभवतः कृपया । इतःपरं यद्वक्तव्यं तदुच्यताम् । कार्यकारणभावविषये जिज्ञासा वर्तते मम । तत्र किञ्चिदभिदधातु श्रीमान् ।

कृष्णः—कार्यस्य कारणस्य च यः परस्परं सम्बन्धः स एव कार्यकारणभाव इति व्यवहारेण विज्ञायते। स चायं तार्किकाणाम तिकर्कशस्य निष्कर्षस्य विषयो भवति। लोके हि यद्यज्जायते तत्सर्वं कार्यमित्युच्यते। कार्यं जन्यमिति पर्यायावेतौ। घटादिकं स्थूल-पृथिव्यादिकं च वस्तुजातं कार्यमिति कथ्यते। यस्मात्कार्यमुत्पद्यते तत् कारणम्। मृदादिकं घटादिं प्रति कारणं भवति। कारण-पर्यायश्च हेतुशब्दः।

रामः—निमित्तशब्दोपि तथैव खलु?

कृष्णः—न। निमित्तशब्दः कारणविशेषवाची, न तु कारण पर्याय इत्यग्रे व्यक्तीभविष्यति।

रामः—अस्तु। कारणेषु किं सन्त्यवान्तरभेदाः।

कृष्णः—विवृणोमि तावत्। यानि किल वस्तूनि सर्वमपि कार्यजातं प्रति कारणतां भजन्ति, तानि साधारणकारणानीति व्य-पदिश्यन्ते; ईश्वरो हि सकलस्यापि जन्यप्रपञ्चस्य कारणं भवतीति तस्य साधारणकारणत्वमामनन्ति नैयायिकाः। एवं प्राणिनामदृष्ट-मपि कार्यमात्रं प्रति साधारणकारणमेव।

रामः—असाधारणकारणस्वरूपं कीदृशम्?

कृष्णः—यत्पुनः कार्यविशेषमेव जनयितुमलम्भवति, तद-साधारणकारणमित्यभिधीयते। यथा घटं प्रति मृत्तिका; पटं प्रति तन्तवश्चासाधारणकारणम्। एवं कारणानां साधारण्याऽसाधार-ण्यभेदः।

रामः—करणमिति किमपि श्रुतचरं मया, तत् किं नाम?

कृष्णः—असाधारणकारणेषु च यानि यं कञ्चन व्यापारं पुर स्कृत्य कार्यं जनयन्ति, तानि करणानीति कथ्यन्ते। दण्डो हि चक्रभ्र-

मणात्मकं व्यापारं जनयन्नेव घटं प्रत्युपकरोति। अतो दण्डस्तं प्रति करणम्। भ्रमणं च तस्य व्यापारः। एवं तन्तवस्संयोगद्वारा पट-मुत्पादयन्तीति तेषां करणत्वं वक्तुं शक्यते। तन्तुसंयोगश्च व्या-पारः। तथाच कार्यंप्रति अव्यवहितपूर्वक्षणवर्तितया यानि कारणानि भवन्ति, तेषां व्यापारान्तरासत्त्वात् करणत्वं न सम्भवति। यथा तन्तुसंयोगादीनाम्। न हि तन्तुसंयोगोत्पत्त्यनन्तरं मध्ये व्यापा-रान्तरं पटजनकमपेक्ष्यते। अतस्तस्य करणत्वमपि नास्त्येव। का-र्याव्यवहितपूर्वक्षणवर्ति कारणमेव करणमिति पक्षान्तरम्। तत्पक्षे तु तन्तुसंयोगस्यैव करणत्वम्।

रामः—किमेतावानेव कारणानां विभागः?

कृष्णः—अथास्त्यपरोपि कारणानां विभागः, समवायिका-रणम् असमवायिकारणम् निमित्तकारणमिति। "समवायिकारण-त्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्। एवं न्यायनयज्ञैस्तृतीयमुक्तं नि-मित्तहेतुत्वम्" इति कारिका।

रामः—विवरणमपि क्रियतां कृपया।

कृष्णः—यत्र कार्यकारणयोस्सम्बन्धः समवायो भवति, तत्र कारणं समवायिकारणमिति निगद्यते। पटंप्रति तन्तवः समवायि-कारणं भवति। यतः अवयविभूतस्य पटस्य अवयवभूतानां तन्तूनाञ्च सम्बन्धः समवाय एव। एवं घटंप्रति मृत्तिका। एवञ्च जन्यद्रव्यं सर्वं प्रत्यपि तदवयवस्समवायिकारणमित्यायाति।

रामः—अवयवापेक्षया अवयविनः पार्थक्यविरहात् कथमिदं सम्बन्धादिवर्णनमुपपद्यते। विभिन्नयोः खलु वस्तुनोस्सम्बन्धकी-र्तनं युज्येत।

कृष्णः—सत्यम्। अवयवी अवयवादत्यन्तभिन्न इति नैयायि-कानां मतम्। अतस्तयोः पार्थक्यमङ्गीकृत्य सम्बन्धादिवर्णनं नानुपपन्नमिति विद्धि।

रामः—तथा वा? बद्धोयमञ्जलिः। उच्यतामुपरिष्टात्।

कृष्णः—द्रव्येषु समुत्पद्यमानं गुणक्रियादिकंप्रति द्रव्याणि समवायिकारणं भवन्ति। यतस्तयोरपि समवाय एव सम्बन्धः। हरिद्रायां सुधायास्संयोगेन शोणरूपं सञ्जायते; तद्रूपं प्रति हरिद्रा समवायिकारणम्। आम्रफलादिद्रव्यं स्वस्मिन् जायमानं पतना-दिकंप्रति च समवायिकारणमिति क्रियायामुदाहरणम्।

रामः—अनया च रीत्या द्रव्यगुणकर्मसु त्रिष्वपि द्रव्यमेव समवायिकारणमिति फलति हि। अतस्समवायिकारणत्वं द्रव्याणा-मसाधारणो धर्म इति द्रव्याणां लक्षणमिति सुवचं वा?

कृष्णः—सुष्ठु गृहीतं त्वया। सुवचमेव तथा। समवायि-कारणत्वं द्रव्यस्यैव सखे।

रामः—इतःपरमसमवायिकारणमधिकृत्याभिधीयताम्।

कृष्णः—जन्यद्रव्यंप्रति अवयवयोरवयवानां वा संयोगोऽसम वायिकारणम्। यथा घटंप्रति कपालद्वयस्य संयोगः, पटंप्रति च तन्तूनां संयोगोऽसमवायिकारणम्। समवायसम्बन्धेन कार्यं यत्र नि ष्पद्यते, तत्र समवायेनैव कारणस्यापि वर्तने सति असमवायिकारणत्व व्यवहार इति सामान्यनियमः। पटस्तन्तुषु समवायेन सञ्जायते; तन्तुषु तन्तुसंयोगोपि समवायेन वर्तते इति पूर्वोक्तोदाहरणे सामा न्यनियमस्य सङ्गतिः।

रामः—एकस्मिन् द्रव्ये वर्तमानो गुणः क्रिया वा यदा त-स्मिन्नेव वस्तुनि गुणान्तरं क्रियान्तरं वा जनयति, तदा कारणी भूतयोर्गुणक्रिययोरसमवायिकारणत्वं सम्भवतीति सिद्धं भवतीतिमन्ये।

कृष्णः—तथैव । गुणाद्गुणान्तरोत्पत्तिस्थलं जानासि वा त्वम् ?

रामः—आत्ममनस्संयोगादात्मनि ज्ञानोत्पत्तिर्भवति खलु ।

कृष्णः—गुणात् क्रियोत्पत्तेरुदाहरणं जानासि वा ?

रामः—गुरुत्वाद्धेतोः फलादीनां पतनं भवतीति क्रियाया गुणादुत्पत्तिमपि जाने । सर्वेष्वेषु दृष्टान्तेषु कारणभूतानां तत्तद्गुणक्रियाणामसमवायिकारणत्वं च विज्ञातम् ।

कृष्णः—सखे ! प्रकारान्तरेणाप्यसमवायिकारणत्वं सम्भवतीति जानीहि ।

रामः—तत् कथमिव ?

कृष्णः—अवयवगतो हि गुणोऽवयविगतं गुणं जनयतीति नैयायिकानामभ्युपगमः । तन्तूनां शुक्लतायां पटस्यापि शुक्लिमा संदृश्यते । तादृशावयवगुणस्य यत्कारणत्वं तदसमवायिकारणत्वमिति च व्यवहारः । तथाच द्रव्यंप्रति अवयवसंयोगः, द्रव्यवृत्तिगुणकर्मणी प्रति तद्द्रव्यस्थगुणकर्मान्तरम्, अवयविगुणं प्रति अवयवगुणश्च कारणं भवत्यसमवायिविधयेति संक्षेपः ।

रामः—यथा समवायिकारणत्वं द्रव्यस्यैवेत्युक्तम्, तथा असमवायिकारणत्वं गुणकर्मणोरेवेति नियमश्च मया गृहीतो भवति।

कृष्णः—नियम एवायम् । “गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्व” मिति हि कारिकापि ।

रामः—अयि ! किन्नाम निमित्तकारणम् ?

कृष्णः—समवायिकारणादसमवायिकारणाच्चव्यतिरिक्तं कारणं निमित्तकारणमिति व्यपदिश्यते । यथा कुलालो घटस्य, तन्तुवायश्च पटस्य, एवमीश्वरः प्राणिनामदृष्टञ्च कार्यसामान्यं प्रति निमित्तकारणं सम्पद्यत इति स्वयमूह्यताम् ।

रामः—निमित्तकारणत्वं तु प्रायस्सर्वेषामपि सम्भवतीत्युक्तं भवति भवता । किमेवमेव ?

कृष्णः—अथ किम् ।

रामः—एकं वस्तु वस्त्वन्तरं प्रति कारणं भवतीति कथमवगम्यते ? कथ्यतामवगमप्रकारः ।

कृष्णः—अन्वयव्यतिरेकसहचारदर्शनेन तदवगम्यत इति तार्किकाः कथयन्ति ।

रामः—अन्वयसहचारः कीदृशः? व्यतिरेकसहचारः कीदृशः।

कृष्णः—तत्सत्त्वे तत्सत्त्वमन्वयसहचारः । यथा तन्तुतन्तुवायादिसामग्रीसत्त्वे पटसत्त्वम् । मृत्तिकाकुलालादिसामग्रीसत्त्वे घटसत्त्वम् । तदभावे तदभावो व्यतिरेकसहचारः । दृश्यते हि तादृशसामग्रीविरहे सति पटाद्यभावश्च ।

रामः—एवमन्वयव्यतिरेकसहचारशालित्वमेव कारणत्वमित्येतावन्मात्रमेव निरवद्यं लक्षणं भवति वा ?

कृष्णः—अन्वयेन व्यतिरेकेण च सहचारशालीनि कार्योत्पत्तिस्थले नियमेन पूर्वकाले विद्यमानानि च वस्तूनि कारणतां भजन्त इति वक्तव्यम् । नियमेनेत्युक्त्या क्वचित् कार्यनिष्पत्तौ यादृच्छिकतया सहकारितामापद्यमानानि वस्तूनि व्युदस्यन्ते ।

रामः—किञ्चिद्विवरणे कृते सत्येव निपयोयं मम मनसि लग्नो भविष्यति । अतः श्रुत एव खल्वहम् ।

कृष्णः—विवृणोमितावत् । कदाचित् स्थलविशेषे मृदानयनाद्युपयोगितया घटंप्रति जनकतां भजन्नपि रासभो न घटकारणं भवति । रासभं विनापि मृदानयनसम्भवेन नियतपूर्ववर्तित्वायोगात् ।

रामः—पूर्वोक्तसाहचर्यसहितानां सर्वेषामपि वस्तूनां कारण-

त्वाभ्युपगमे कृते, घटादिकार्योत्पत्तिस्थले गगनादिसद्भावस्य नियततत्वेन तेषामपि कारणत्वमङ्गीकरणीयं भवेत् खलु। किमेवमङ्गीकरणीयमेव ?

कृष्णः—पूर्वोक्तसाहचर्यसहितान्यपि कतिचिदुदासीनवस्तूनि कार्याधिकरणे कामं सत्तां लभेरन्नपरिहरणीयतया; तथापि न तेषां कारणत्वं व्यवहरन्ति प्रामाणिकाः। तादृशानां पदार्थानामन्यथासिद्धत्वव्यवहारश्शास्त्रे सिद्ध इति विद्धि। घटोत्पत्तिस्थले दण्डादिकारणसत्त्वस्याऽवर्जनीयतया तेन कारणेन सह सन्ततमपि सञ्चरतां दण्डत्वदण्डरूपादीनां सत्यपि घटपूर्वभावित्वनियमे घटकारणता नास्ति, अन्यथासिद्धत्वात् -- इति च प्रामाणिकानामभ्युपगमः।

रामः—सखे ! कार्यकारणभावविषये कारणभेदविषये कारणत्वनिर्णयविषये च एतावता बोधितेन पर्याप्तम्। इतःपरमन्यस्मिन् विषये वक्तव्यमुच्यताम्।

कृष्णः—समानामपि पदार्थानां मध्ये बुद्धेः प्रपञ्चायैव महीयान् यत्न आस्थितस्तार्किकवरेण्यैः। अतस्तत्र विषये गुणान्तरापेक्षया विशेषतो वक्तव्यं सुबहु विद्यते।

रामः—तर्हि तत्र प्रवर्त्यतां प्रियसखेन जिह्वा।

**कृष्णः—ज्ञानंतावत्** स्मृतिरनुभवश्चेति द्वेधा विभज्यते। स**कृदवलोकितस्य अनुमितस्य** श्रुतस्य वा यत् कालान्तरे जायमानं स्मरणं ' घटमहं स्मरामी ' त्यादिप्रतीतिसिद्धम्, तदेव स्मृतिरित्युच्यते। स्मृतिभिन्नं ज्ञानमनुभवः।

रामः—अनुभवात्मकस्य ज्ञानस्य प्रकारः किं नोपपादयितुं शक्यते प्रियवयस्येन?

कृष्णः—कुतो न शक्यते, "घटमहं साक्षात्करोमि—वह्निमनुमिनोमि—स्वर्गं शृणोमी" त्यादिरूपो बहुप्रकारस्सम्भवत्यनुभवः ।

रामः—अनुभवस्य प्रकारास्सन्तु नाम भूयांसः ; तस्य कति सन्ति जातिभेदाः ?

कृष्णः—प्रत्यक्षम् अनुमितिः उपमितिः शाब्दबोध इति चत्वारो जातिभेदा अनुभवस्य । तेषु च प्रत्यक्षस्य करणमिन्द्रियाणि । अनुमितेः करणं व्याप्तिज्ञानम् । उपमितेस्सादृश्यज्ञानम् । शाब्दबोधस्य शब्दज्ञानञ्च ।

रामः—एतेषां स्वरूपमुदाहरणादिकं च शुश्रूषतेऽयं जनः ।

कृष्णः—श्रावयामि तावत् क्रमशः । प्रथमतः प्रत्यक्षमधिकृत्य प्रोच्यते । चक्षुरादीनां षण्णामिन्द्रियाणां घटादीनामर्थानां च सम्बन्धेन जायमानं ज्ञानं प्रत्यक्षमित्यभिधीयते ।

रामः—चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणीति मया विज्ञातमेतावता कालेन । इदानीं तु 'षण्णामिन्द्रियाणा' मिति कथयता भवता षष्ठमिन्द्रियं किमभिप्रेतमिति जिज्ञासे ।

कृष्णः—"चक्षुः श्रोत्रं घ्राणजिह्वे त्वङ्मनश्चेन्द्रियाणि षट् । ज्ञानोत्पत्तिनिमित्तत्वात् ज्ञानेन्द्रियपदास्पदम् ॥" इति कारिकां विद्धि ।

रामः—ज्ञातार्थोऽस्मि । उच्यतामुपरिष्टात् ।

कृष्णः—तत्र चक्षुषा त्वचा च द्रव्याणां प्रत्यक्षमुपजायते । श्रोत्रं घ्राणं जिह्वा च न द्रव्यग्राहकाणि । तानि पुनः शब्दादीन् गुणान् तद्गतान् जातिविशेषांश्च गृह्णन्ति । येनेन्द्रियेण यद्गृह्यते तेनैवेन्द्रियेण तन्निष्ठा जातिस्तदभावश्च गृह्यत इति नियमः ।

रामः—अनुभवसिद्धश्चायमर्थ इति मन्ये। न हि रूपग्राहका-च्चक्षुषोऽन्येन केनापीन्द्रियेण नीलत्वपीतत्वादिजातिः नीलाद्यभावो वा ग्रहीतुं शक्यते।

कृष्णः—एवमेतत्। तथा च तत्तदिन्द्रियग्राह्यगुणगता जातयः तत्तद्गुणाभावश्च तदिन्द्रियमात्रेण गृह्यन्ते इति शब्दाद्यभावोपि श्रोत्रादिमात्रगोचर इति फलितम्। अन्तःकरणापरपर्यायभूतं मनःपुनः आत्मानमात्मवृत्तीन् प्रत्यक्षयोग्यान् सुखदुःखादींश्च गृह्णाति। आत्मप्रत्यक्षे असाधारणकारणमन्तःकरणम्, प्रत्यक्षसामान्ये इत्येव न, अपि तु ज्ञानसामान्ये साधारणं कारणं भवति। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमिति प्रत्यक्षजननक्रमे तार्किकाणां प्रवादः।

रामः—'संयुज्यते' इत्यस्य संयोगसम्बन्धावच्छिन्नवृत्तित्व मर्थो वा?

कृष्णः—न। सम्बध्यते इति केवलमर्थः। तेन यादृशविषये इन्द्रियस्यार्थेन समवायस्सम्बन्धः तत्रापि न नियमभङ्गः। एष च क्रमो बाह्यप्रत्यक्ष एव, आन्तरप्रत्यक्षे तु 'आत्मा मनसा संयुज्यते, ततः प्रत्यक्षम्' इत्येवापेक्ष्यते।

रामः—प्रत्यक्षज्ञाने सहकारितयाऽवतिष्ठमान इन्द्रियस्याऽर्थेन सह सम्बन्धः खलु।

कृष्णः—आम्। स एव सन्निकर्ष इति व्यपदिश्यते।

रामः—स च कतिविधः?

कृष्णः—स तु षोढा विभज्यते नैयायिकैः। संयोगः, संयुक्त समवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति षडिन्द्रियार्थसन्निकर्षाः प्रत्यक्षे सहकुर्वन्ति।

रामः – कतमस्मिन् प्रत्यक्षे कतमस्सन्निकर्षस्सहकारी भवतीति जिज्ञासे । विविच्योच्यताम् ।

कृष्णः—तत्र द्रव्यप्रत्यक्षे–घटादीनां बाह्यद्रव्याणामात्मनश्चाभ्यन्तरद्रव्यस्य प्रत्यक्षे संयोगस्सन्निकर्षः । इन्द्रियाणामपि द्रव्यान्तर्गतत्वेन द्वयोर्द्रव्ययोस्संयोगस्यैव सम्बन्धतासम्भवात्। द्रव्यसमवेतानां गुणक्रियाजातीनां प्रत्यक्षे संयुक्तसमवायः । द्रव्यसमवेतगुणादिषु समवायेन विद्यमानानां रूपत्वनीलत्वादिधर्माणां प्रत्यक्षे संयुक्तसमवेतसमवायः । श्रोत्रेण शब्दप्रत्यक्षे परं समवायस्सन्निकर्षः। श्रोत्रं नाम कर्णशष्कुलीदेशवर्ति आकाशमेव । आकाशस्य च शब्देन समवायस्सम्बन्धो गुणगुणिभावात्प्राप्नोति । शब्दवृत्तिधर्माणां शब्दत्व कत्व खत्वादीनां प्रत्यक्षे च समवेतसमवायः । तदेवं चतुर्थपञ्चमसन्निकर्षौ शब्दतत्समवेतधर्मयोः प्रत्यक्षे केवलमुपाकुर्वाते । नपुनरन्यत्र कुत्रापि । अभावस्य प्रत्यक्षे तु विशेषणविशेष्यभावस्सम्बन्धः । भूतले घटाभाव इति प्रत्यक्षे सति अभावस्य विशेष्यता, भूतलं घटाभाववदिति प्रत्यक्षे तस्य विशेषणताचेत्यवसेयम् । अत्रेमाः कारिकाः परिचिन्तय—“ द्रव्यग्रहस्तु संयोगात् , संयुक्तसमवायतः । द्रव्येषु समवेतानाम्, तथा तत्समवायतः ॥ तत्रापि समवेतानाम्, शब्दस्य समवायतः। तद्वृत्तीनां समवेतसमवायेन तु ग्रहः। विशेषणतया तद्वदभावानां ग्रहो भवेत् ॥ ” इति ।

रामः—सखे ! लौकिकप्रत्यक्षमलौकिकप्रत्यक्षं चेति मया द्विविधं श्रुतचरम् । तत्र किञ्चिद्विवरणं कुरु ।

कृष्णः—इदानीमुपपादिता एते सन्निकर्षा लौकिकसन्निकर्षा इत्युच्यन्ते । एतज्जन्यं प्रत्यक्षं लौकिकप्रत्यक्षमिति च प्रतिपाद्यते ।

अलौकिकप्रत्यक्षं तु किञ्चिद्गहनतरमिति नात्यन्तमुपयोगीति च कृत्वा सम्प्रति तत्रोदासे ।

रामः—अस्तु । प्रत्यक्षविषयक उपदेशः परिसमाप्तो वा ?

कृष्णः—अलमेतावता कथितेनेति मन्ये । लौकिकप्रत्यक्षज्ञाने चक्षुरादीनीन्द्रियाण्यसाधारणकारणानि । सन्निकर्षश्च तेषां व्यापारः । प्रत्यक्षज्ञानकारणभूतानीन्द्रियाणि च क्वचित् प्रत्यक्षशब्देन व्यवह्रियन्ते इति प्रत्यक्षविषयकोपदेशमुपसंहरामि ।

रामः—सखे ! कृष्ण ! इतःपरमनुमिति मधिकृत्य प्रोच्यताम् । अत्रैव हि तार्किकाणामुत्साहः ।

कृष्णः—शृणु वच्मि । ज्ञातेन अज्ञातस्य वस्तुनो ज्ञानमनुमितिः । यथा—पर्वते धूमं दृष्ट्वा तत्र वह्नेरपि सद्भावो निश्चीयते, साऽनुमितिः ।

रामः—स्तनितं निशम्य गृहान्तस्स्थितस्यापि गगने मेघप्रादुर्भावनिश्चयो जायते खलु ; साप्यनुमितिरेव वा ?

कृष्णः—अथकिम् ।

रामः—अनुमितौ कस्य कस्य वस्तुनोऽस्त्यावश्यकता ?

कृष्णः—सर्वास्वप्यनुमितिषु त्रीणि वस्तून्यवश्यमपेक्षितानि। पक्षः साध्यं हेतुरिति च तेषां नामानि । यस्मिन् वस्तुनि किञ्चिदस्तीत्यनुमीयते स पक्षः । पर्वते वह्निरनुमीयतेचेत् पर्वतः पक्ष इत्युच्यते । यत् अपूर्वतया ज्ञायतेऽनुमानेन, तत् साध्यम् । पर्वतो वह्नि मानित्यनुमितौ वह्निस्साध्यमित्युक्तं भवति । यस्य ज्ञानं साध्यानुमितिं जनयति स हेतुः । धूमेन दृष्टेन वह्नेरनुमितौ धूमो हेतुरित्युक्तं भवति । हेतुसाध्ययोर्व्याप्तिज्ञानादनुमितिरुत्पद्यत इति तज्ज्ञानमेवानुमितौ करणं भवति । तस्य चाऽनुमानमिति नामान्तरम् ।

रामः—का नाम व्याप्तिः ?

कृष्णः—उच्यते । हेतुसाध्ययोस्साहचर्यनियम एव व्याप्तिः । यत्रयत्र हेतुर्वर्तते तत्रतत्र साध्यं वर्तत इत्यन्वयसाहचर्यमन्वयव्याप्तिरित्युच्यते । यत्र साध्यस्याभावः तत्र हेतोरप्यभाव इति व्यतिरेकव्याप्तिः ।

रामः—एतादृशव्याप्तिद्वयं किं सर्वेष्वनुमितिस्थलेषु सङ्घटते ?

कृष्णः—यदि वह्नेस्साध्यत्वं धूमस्य हेतुत्वं च भवति तर्हीदृशं व्याप्तिद्वयमपि धूमे संघटते । अस्ति हि 'यत्रयत्र धूमस्तत्रतत्राग्नि' रिति नियमः । तथैव 'वह्न्यभावे धूमाभाव' इति नियमश्च । साध्यव्याप्तिविशिष्टो हेतुः पक्षे वर्तत इति ज्ञानमनुमितेः पूर्वमपेक्ष्यते। अस्य च ज्ञानस्य परामर्श इति संज्ञा । तथा च अनुमितौ व्याप्तिज्ञानं कारणम्; परामर्शस्तद्व्यापार इत्यायातम् । बहुशस्साहचर्यदर्शनेन वह्निधूमयोर्व्याप्तिं गृहीतवान् पुमान् यदा पर्वते धूमं पश्यति, तदा व्याप्तिस्तस्य स्मृतिपथमारोहति । तदेव व्याप्तिस्मरणं 'वह्निव्याप्तिविशिष्टधूमवान् पर्वत' इति परामर्शं पुरस्कृत्याऽनुमितिं जनयतीति तस्यानुमितौ करणत्वं सम्पद्यते ।

रामः—एतच्च, 'व्यापारवदसाधारणकारणं करण' मिति मतमनुसृत्योच्यत इति मन्ये । येषां तु 'कार्याव्यवहितपूर्ववर्ति कारणं करण' मित्यभ्युपगमः, तन्मते परामर्श एवानुमितौ करणमिति वक्तुं शक्यते खलु ?

कृष्णः—आम् । शक्यत एव ।

रामः—अनुमितौ योपिकोपि भेदो वर्तते न वा ?

कृष्णः—अनुमितेस्तावत् फलप्रयुक्तो भेदो द्विधा भवति । साध्यनिश्चय एव ह्यनुमितेः फलम्; तच्चेत्फलं स्वयमेव व्याप्तिं गृही-

स्वा हेतुदर्शनेन साध्यं निश्चिन्वानस्य पुंसस्सम्भवति, तर्हि तस्यानु- मितिः स्वार्थानुमितिरित्युच्यते । यत्र तु स्वयं वह्निमनुमितवतः पर- बुबोधयिषया वाक्यप्रयोगेण परस्यानुमितिर्जायते, सा परार्थानुमितिः।

रामः – तथाच स्वार्थं परार्थं चेत्यनुमानमपि द्विविधं सम्प- द्यत इत्युक्तं भाति । तत्र स्वार्थानुमितेरुत्पत्तिक्रमः प्रथमं प्रदर्शित एवाभूत्तत्रभवता । परार्थानुमितौ तु योऽपेक्ष्यते वाक्यप्रयोगः तस्य स्वरूपं निरूप्यतामित्यर्थये ।

कृष्णः—परार्थानुमितये प्रयुज्यमानस्य वाक्यसमूहस्य पञ्च सन्त्यवयवाः । अतस्तत् पञ्चावयववाक्यमित्यभिधीयते ।

रामः—के ते पञ्चावयवाः ?

कृष्णः—प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनं चे- त्यवयवाः पञ्च ।

रामः—क्रमेण विवरणं क्रियताम् ।

कृष्णः—पक्षस्साध्यवानिति वचनं प्रतिज्ञा । पर्वतो वह्निमा- निति वाक्यं प्रतिज्ञा भवति । साध्यसाधकस्य हेतोः प्रतिपादनं हेतुः । एतच्च प्रायेण पञ्चम्यन्तं भवति । धूमवत्त्वादिति वाक्यं हेतु भवति । ( तद्वत्त्वं च तदेवेति न्यायेन ' धूमात् ' इतियावत् । )

रामः—मध्ये काचिदियमाशङ्काऽङ्कुरति मम । " धूमवत्त्वा- दिति वाक्य " मिति यदिदानीं प्रियमित्रेण प्रयुक्तम्, तत् कथमुप पद्यते ? पदमात्रं खलु तत् । पदसमूह एव हि वाक्यम् । धूमवत्त्वा- दित्येकमात्रं पदं कथं वाक्यं भवेदिति ।

कृष्णः—साधु पृष्टम् । प्रष्टव्यमेतत् । नैयायिकानां मते एकमपि सुबन्तं तिङन्तं वा वाक्यं भवति । वाक्यं पदसमूह इति न विरुद्ध्यते । तन्मते अर्थबोधनसमर्थं सर्वमपि पदं भवति । न तु

' सुप्तिङन्तं पद ' मिति तेषामभ्युपगमः । तथाच प्रकृतिः प्रत्ययश्च पृथक्पदे स्यातामिति केवलसुबन्तस्यापि वाक्यत्वमव्याहतमिति विद्धि ।

रामः—सन्तुष्यामि । उपरिष्टादभिधेहि ।

कृष्णः—हेतुसाध्ययोर्व्याप्तिप्रदर्शकं वाक्यमुदाहरणम् । "यो यो धूमवान् स वह्निमान् ; यथा महानस " इत्युदाहरणवाक्यम् । उदाहरणवाक्ये व्याप्तेर्दृष्टान्तोप्यन्तर्भवति । व्याप्तिविशिष्टहेतोः पक्षवृत्तित्वं बोधयद्वाक्यमुपनयः । ' तथा चायम् ' इत्युपनयस्वरूपम् । ' तथा ' इत्यस्य वह्निव्याप्यधूमवानित्यर्थकतया उपनयस्य व्याप्तिविशिष्टहेतुमत्पक्षबोधकता । हेतुसत्त्वात्साध्यविशिष्टः पक्ष इति प्रतिपादयद्वाक्यं निगमनम् । " तस्मात्तथा " इति निगमनशरीरम् । वह्निव्याप्यधूमवत्त्वादयं वह्निमानिति तदर्थः ।

रामः—एतावता मया ज्ञातमनूद्यते ;–' पर्वतो वह्निमान्, धूमवत्त्वात् ; योयो धूमवान् स वह्निमान्, यथा महानसः ; तथा चाऽयम् , तस्मात्तथा ' इति समग्रस्य पञ्चावयववाक्यस्य शरीरं सम्पद्यत इति ।

कृष्णः—सम्यगेव गृहीतं सुहृदा । साधु । एतादृशवाक्यप्रयोगजन्या चानुमितिः परार्थानुमितिरिति व्यवह्रियते । अनयैव रीत्या स्थलान्तरेष्वपि पञ्चावयववाक्यं स्वयं रचनीयमिति दिक् ।

रामः—सखे ! किमस्ति कश्चन भेदो हेतूनाम् ?

कृष्णः—हेतूनां तावद्व्याप्तिप्रयुक्तः प्रभेदस्त्रिविधो भवति । अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति त्रिविधा हेतवः ।

रामः—भवतैव सम्यग्विवरणं कर्तव्यम्। अन्यथा तु न किमपि बुद्धिविषयो भवेत्।

कृष्णः—विवृणोमि सखे!। येषां हेतूनामन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च भवतः, ते अन्वयव्यतिरेकिणः, वह्नौ साध्ये धूमात्मको हेतुरन्वयव्यतिरेकी भवति।

रामः—'यत्र धूमस्तत्राग्निः, यथा महानसे; यत्र वह्न्यभावस्तत्र धूमाभावो यथा महाह्रदे' इति द्विविधाया अपि व्याप्तेस्तत्र सम्भवादेवमुक्तमिति ज्ञातं मया। उच्यतामुपरिष्टात्।

कृष्णः—येषां हेतूनामन्वयव्याप्तिरस्ति, व्यतिरेकव्याप्तिः परं नास्ति, ते केवलान्वयिनः। यथा घटो वाच्यो ज्ञेयत्वादित्यत्र वाच्यत्वे साध्ये ज्ञेयत्वं केवलान्वयी हेतुः।

रामः—तत्र हि 'यत्रयत्र ज्ञेयत्वं तत्रतत्र वाच्यत्वम्, यथा पटादौ' इत्यन्वयोदाहरणं सम्भवति। 'यत्र वाच्यत्वाभावः तत्र ज्ञेयत्वाभाव' इति तु न सम्भवति। सर्वस्यापि वस्तुजातस्य वाच्यत्वेन वाच्यत्वाभावस्य कुत्राप्यप्रसिद्धतया गगनकुसुमसोदरत्वात्। अतस्तत्र व्यतिरेकव्याप्तिर्नास्तीत्यवगतम्। उपरिष्टादुदीर्यताम्।

कृष्णः—अत्रैव किञ्चिदवधेहि। वाच्यं ज्ञेयत्वादित्यत्र साध्याभाव इव हेत्वभावोऽप्यप्रसिद्धः। परन्तु हेतोः केवलान्वयित्वं प्रति सर्वदा तन्नापेक्ष्यते। अतो घटो वाच्यो द्रव्यत्वादित्यादावपि साध्याभावाप्रसिद्धिमात्रेण हेतोः केवलान्वयित्वं सम्भवतीति विज्ञेयम्।

रामः—अथ केवलव्यतिरेकिविषयः कथ्यताम्।

कृष्णः—येषां हेतूनां व्यतिरेकव्याप्तिरस्ति, अन्वयव्याप्तिस्तु नास्ति, ते केवलव्यरेकिणः। यथा—'पृथिवी जलादिसकलवस्तु-

भिन्ना, गन्धवत्त्वात् इत्यत्र गन्धवत्त्वं केवलव्यतिरेकि ।

रामः—' यत्र जलादिभेदाभावः तत्र गन्धाभावः, यथा जले ' इति व्यतिरेकव्याप्तिस्तत्र सम्भवति । ' यत्र गन्धस्तत्र जलादिभेद ' इति तु न संघटते । पृथिवीव्यतिरिक्तस्य कस्यचिद्गन्धवतो वस्तुनोऽसत्त्वात् दृष्टान्ताभावेन तादृशव्याप्तिग्रहासम्भवात्—इति गृहीतं मया ।

कृष्णः—अत्र चावधेहि । इदं पक्षव्यतिरिक्तस्यैव दृष्टान्तत्वमित्यभिप्रायेण । यदि तु पक्षैकदेशस्य घटादेर्दृष्टान्तत्वमनुमन्यते, तर्ह्यत्राप्यन्वयव्याप्तिस्सम्भवितुमर्हति खलु । अस्त्वेतत् । सखे ! पक्षसपक्षविपक्षानधिकृत्य सम्प्रति किमपि सारतमं वच्मि, निशमय।

रामः—सखे ! प्रागेव प्रत्यपादि खलु भवता—' यस्मिन् वस्तुनि किञ्चन वस्त्वन्तरमनुमीयते तत् पक्षसंज्ञ ' मिति ।

कृष्णः—शृणु तावत् ; पक्षत्वं तावद्बहुधा निरुच्यते नैयायिकैः । तत्र ' सन्दिग्धसाध्यवान् पक्ष ' इत्येकं निर्वचनम् । पर्वतादौ वह्न्यनुमितेः पूर्वं साध्यं सन्दिग्धमेवेति तस्य पक्षत्वोपपत्तिः।

रामः – एतच्च पक्षत्वं क्वचिद्घटयितुं न शक्यत इति मन्ये । यत्र स्तनितेन मेघानुमितिर्भवति, तत्र साध्यसन्देहस्यैवानुत्पत्तेः ।

कृष्णः—सत्यमेतत् ; अत एव प्रकारान्तरेण पक्षत्वं निर्वचनीयं भवति । ' सिद्ध्यभाववान् पक्ष ' इति निर्वचनं स्वीक्रियते। यत्र साध्यनिश्चयो न जातः, स सिद्ध्यभाववानित्यनेन बोध्यते । तथाच स्तनितेन मेघानुमितिस्थलेपि अनुमितेः पूर्वं सिद्ध्यभावसत्त्वात् तत्रापि पक्षत्वं घटते ।

रामः—क्वचित्सत्यपि प्रकारान्तरेण साध्यनिश्चये पुनरपि सत्यामनुमितीच्छायामनुमितिर्जायत इति तार्किकाणां प्रवाद इति श्रुतं पूर्वं मया ; किमत्र तत्त्वम् ?

कृष्णः—सत्यमेतत् । "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति कस्यचित्तार्किकपरिबृढस्य सूक्तिमहमपि स्मरामि । वह्नेर्दर्शनानन्तरमपि 'धूमेन वह्निमनुमिनुया' मितीच्छा यदि जायते, तर्हि वह्न्यनुमितिरुत्पद्यत इति सिद्धान्तः । अतः सिषाधयिषापि पक्षतां सम्पादयति ।

रामः— एवञ्च, यत्र सिषाधयिषासिद्ध्यभावयोरन्यतरद्वर्तते, सोयं पक्ष इति पर्यवसितं भवति खलु ।

कृष्णः—आम् । अनुमित्युद्देश्यत्वं पक्षत्वमित्यप्याचक्षते । 'पर्वतो वह्निमा' नित्यनुमितौ पर्वत उद्देश्यः ; वह्निर्विधेयः । तथाच पर्वतोद्देश्यकवह्निविधेयकानुमितिरिति तां ब्रुवन्ति । अस्तु। अथ सपक्षमधिकृत्य किञ्चिदभिदधानि शृणु । यत्र साध्यं निश्चितं स सपक्षः । यथा वह्नौ साध्ये महानसादिः । अन्वयव्याप्तौ सपक्षो दृष्टान्तभावं भजते । 'यत्र धूमस्तत्राग्निः, यथा महानसे' इति च तदभिलापेन स्पष्टमिदम् ।

रामः—यत्र साध्याभावो निर्णीतः स विपक्ष इति मन्ये ।

कृष्णः—तथैव; यथा वह्नौ साध्ये ह्रदादिः ।

रामः—सपक्षोऽन्वयव्याप्तौ दृष्टान्तभावं भजते यथा, तथा विपक्षो व्यतिरेकव्याप्तौ दृष्टान्तभावं भजत इति मन्ये ।

कृष्णः—तथैव । 'यत्र वह्निर्नास्ति, तत्र धूमोपि नास्ति यथा ह्रदे' इति व्यतिरेकव्याप्तेरभिलापः ।

रामः—किं सर्वेष्वप्यनुमानेषु पक्षसपक्षविपक्षास्सम्भवन्ति ?

कृष्णः—न न । अन्वयव्यतिरेकिणि हेतौ पक्षस्सपक्षो विपक्ष इति त्रयोप्येते सम्भवन्ति । केवलान्वयिनि साध्याभावस्याप्रसिद्ध्या विपक्षो नास्ति, इतरौ स्तः । केवलव्यतिरेकिणि तु अनु-

मितेः पूर्वं साध्याप्रसिद्ध्या सपक्षो नास्ति, परौ स्त इति संक्षेपः ।

रामः—इतःपरं हेत्वाभासानधिकृत्य व्याहरतु तत्रभवान् ।

कृष्णः—व्याप्तिविशिष्टस्य हेतोः पक्षवृत्तित्वज्ञानादनुमितिरुत्पद्यत इति प्रत्यपादि किल । वस्तुतो व्याप्तिपक्षवृत्तित्वाभ्यां रहितस्यापि हेतोस्तद्वत्ताभ्रमेण यद्यनुमितिर्जायते तर्हि सा न प्रमाणं भवति । तथाविधानुमितिजनकश्च हेतुः हेत्वाभास इत्युच्यते ।

रामः—यतस्स आपातमात्रेण हेतुरिव भासते तत एव हेत्वाभास इति नामधेयमभूदिति मन्ये ।

कृष्णः—तथैव । एतादृशा हेतवः पञ्चधा विभक्ता नैयायिकैः । अनेकान्तः, विरुद्धः, सत्प्रतिपक्षः, असिद्धः, बाधितःइति पञ्चविधा हेत्वाभासः ।

रामः—सव्यभिचार इति कश्चन हेत्वाभासो मया श्रुतचरः । स किं श्रीमता न प्रत्यपादि ?

कृष्णः—आदितः ' अनेकान्त ' इति मया प्रोक्तं खलु । तस्यैव सव्यभिचार इति नामान्तरम् ।

रामः—तथा वा ? प्रसीदतु भवान् । एषां लक्षणोदाहरणे श्रोतुमिच्छामि ।

कृष्णः—तत्र प्रथमस्यानेकान्तस्य हेतोः साधारणः, असाधारणः, अनुपसंहारीति सन्ति त्रयोऽवान्तरभेदाः ।

रामः—तेषामपि विवरणं कामये ।

कृष्णः—साध्याभाववति वस्तुनि वर्तमानो हेतुस्साधारणो भवति । पर्वतो वह्निमान् ज्ञेयत्वादित्यादिकं तदुदाहरणम् । अत्र हेतुभूतं ज्ञेयत्वं वह्न्यभाववति ह्रदेपि वर्तत इति तस्य साधारणत्वम् । सर्वेषु सपक्षेष्वविद्यमानः पक्षमात्रवृत्तिर्हेतुरसाधारणः ; शब्दो नि-

त्यश्शब्दत्वादिति तदुदाहरणम्। अत्र नित्यत्वं साध्यम्। तच्च गगनादौ निश्चितमिति गगनादयस्सपक्षाः। शब्दत्वात्मको हेतुस्तेषु कुत्रापि न वर्तते ; तस्य शब्दमात्रवृत्तित्वात्। अतस्तस्याऽसाधारणत्वम्।

रामः—तार्किकाश्शब्दस्याऽनित्यत्वं सिद्धान्तयन्ति ; अतस्तन्मते नित्यत्वसाधकहेतोर्दुष्टत्वमेवोपपादनीयम्। घटो नित्यो घटत्वादित्यादिकं तु निराक्षेपमुदाहरणं भवतीति मन्मतिः।

कृष्णः—बुद्धिमानसि। युक्तमेवोक्तम्।

रामः—सर्वेषु सपक्षेष्वविद्यमानः पक्षमात्रवृत्तिर्हेतुरसाधारण इति श्रीमता प्रतिपादितम्। वस्तुतः साध्यं यत्रास्ति तत्रावर्तमानत्वमेवाऽसाधारणत्वमिति केचिदभिप्रयन्तीति शृणोमि।

कृष्णः—सत्यमेतत्। केषाञ्चिन्मते तथा भवति। तन्मते साध्यनिश्चयस्यानपेक्षणात् मूलोक्तमत इव असाधारणस्य कदाचिद्दोषत्वं कदाचिददोषत्वं च न सम्भवति। तन्मते हि शब्दोऽनित्यश्शब्दत्वादिति सद्धेतावपि पक्षे साध्यसंशये सति असाधारण्यं स्यात्। एतन्मते तन्नास्ति।

रामः—अथ विविच्यतामनुपसंहारी।

कृष्णः—यस्य हेतोरन्वयदृष्टान्तो व्यतिरेकदृष्टान्तश्च नास्ति, सोऽनुपसंहारी। यथा—सर्वमभिधेयं प्रमेयत्वात्। अत्र सर्वस्यापि पक्षत्वात् व्याप्तिग्रहोपयोगी दृष्टान्तो न विद्यते। साधारणासाधारणानुपसंहारिषु त्रिष्वपि व्याप्तिज्ञानानुदयात् तद्विशिष्टहेतोः पक्षवृत्तित्वज्ञानमपि नोदेतीति अनुमितेरनुत्पत्तिर्वेदितव्या।

रामः—अथ विरुद्धः कीदृशो नाम?

कृष्णः—यत्र साध्यस्य व्याप्तिर्नास्तीत्येव न, प्रत्युत साध्याभावस्य व्याप्तिरस्ति च, स विरुद्धः । यथा—घटो नित्यः जन्यत्वात् पटवत् । अत्र, यत्र जन्यत्वं तत्र नित्यत्वमिति न सम्भवतीत्येव न, प्रत्युत यत्र जन्यत्वं तत्र नित्यत्वाभाव इति व्याप्तिर्वर्तते च।

रामः—एवञ्च, विरुद्धस्य साध्याभावग्राहकतया साक्षादेवानुमितिविरोधिता सुवचेति मन्ये ।

कृष्णः—तथैव कथयन्ति । अथ सत्प्रतिपक्षं निरूपयामि शृणु । यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः । यथा—शब्दो नित्यः श्रावणत्वात् शब्दत्ववदित्युक्ते, शब्दोऽनित्यः जन्यत्वात् घटवदिति नित्यत्वाभावसाधकं हेत्वन्तरं जन्यत्वरूपं वर्तत इति प्रथमस्य हेतोस्सत्प्रतिपक्षता । अयमप्यनुमितिं साक्षादेव प्रतिबध्नाति ।

रामः—'सन् प्रतिपक्षो यस्य' [स्वप्रतिभटहेत्वन्तरवान्] इति व्युत्पत्त्या अन्वर्थं नाम मन्ये। प्रागुक्तविरुद्धापेक्षया अस्य भेदो दुरूह इति भाति ।

कृष्णः—कथं दुरूहः ? विरुद्धे साध्यसाधकत्वेनोपन्यस्तो हेतुरेव साध्याभावस्य साधकः । सत्प्रतिपक्षे तु हेत्वन्तरमिति भेदस्सुगमो न किम् ?

रामः—सत्यमेतत् । अवहितमिदानीम् । अथ निरूप्यतामसिद्धः ।

कृष्णः—असिद्धस्त्रिधा;—आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्च । यस्य पक्ष एवाप्रसिद्धः, स आश्रयासिद्धः । गगनारविन्दं सुरभि—अरविन्दत्वादिति तदुदाहरणम् । अत्र गगनारविन्दात्मकः पक्ष एवाप्रसिद्धः । पक्षस्यैवाप्रसिद्धौ हेतोस्तद्वृत्ति-

त्वज्ञानं दूरापास्तमिति अमुष्य दुष्टत्वम् ।

रामः—अथ स्वरूपासिद्धिर्निरूप्यताम् ।

कृष्णः—पक्षे हेतोरवर्तमानत्वं स्वरूपासिद्धिः । शब्दो गुण-श्चाक्षुषत्वादित्यत्र स्वरूपासिद्धिः । न हि शब्दश्चक्षुषा गृह्यते । अतस्तस्य चाक्षुषत्वमेव नास्ति । अत्रापि हेतोः पक्षवृत्तित्वज्ञानं नोदेति ।

रामः—सखे ! अत्र किञ्चिदनुयोक्तव्यं प्रतिभाति । न हि शब्दश्चक्षुषा गृह्यत इति कथमिदं सुवचम् ? आशीविषो हि चक्षुषैव खलु शब्दं गृह्णाति । चक्षुश्श्रवा इति हि नामापि तस्य ।

कृष्णः—बुद्धिमानसि । सर्पश्चक्षुश्श्रवा इत्यहमपि जाने । शब्दं चक्षुषैव गृह्णतोपि सर्पस्य शब्दग्रहणकाले परं चक्षुः श्रोत्रसंज्ञां भजत इति विद्धि । रूपग्रहणकाले तु चक्षुश्चक्षुरेव । शब्दग्रहणकाले तु श्रोत्रमेव तत् ।

रामः—अन्यत् किमप्युदाहरणमुक्तं चेत् का हानिः ? रूपं गुणः श्रावणत्वादित्यादिकमपि उदाहरणं भवितुमर्हति खलु ।

कृष्णः—सन्ति कामं परश्शतान्युदाहरणानि । उक्तोदाहरणे न कापि हानिरित्यवधेहि ।

रामः—व्याप्यत्वासिद्धो निरूप्यताम् ।

कृष्णः—व्याप्तेरभावो व्याप्यत्वाऽसिद्धिः । पर्वतो वह्निमान् नीलधूमादित्यादिकं तदुदाहरणम् । तत्र धूमे नीलत्वांशस्याऽनावश्य-कतया तद्रूपेण व्याप्यव्यापकभावो न स्वीकृतः । अत्रापि व्याप्ति-ज्ञानानुत्पत्त्या तद्विशिष्टहेतोः पक्षवृत्तित्वं न ग्रहीतुं शक्यम् ।

रामः—अथ बाधितो निरूप्यताम् ।

कृष्णः—यत्र पक्षे साध्याभावः प्रमाणान्तरेण निश्चेतुं शक्यते, स बाधितः । ह्रदो वह्निमान् धूमात् ; वह्निरशीतः द्रव्यत्वात्—इत्यादिकं तदुदाहरणम् । ह्रदे वह्न्यभावः, वह्नौ शीतत्वाभावश्च प्रत्यक्षेण ग्रहीतुं शक्यत इति तत्साधने बाधितत्वम् । अत्र च साध्याभावज्ञाने सति साध्यज्ञानानुदयात् साक्षादनुमितेः प्रतिबन्धः ।

रामः—सखे ! एकस्मिन्नेव दुष्टोदाहरणे दोषान्तरमपि वर्तते यदि, तयोः पृथक्करणं व्यर्थमेव खलु ।

कृष्णः—किमाक्षिपति भवानिति स्पष्टं नावगम्यते । अभिसन्धिमुद्घाटय ।

रामः—बाधितस्थले पक्षे हेतुरस्तिचेदनेकान्तः ; नास्ति चेत् स्वरूपासिद्धः इति बाधितस्य पृथग्गणनं किमर्थमिति मम शङ्का।

कृष्णः—अस्मिन् विषये मयैव किञ्चिदभिधित्सितमासीत् । अर्थात् त्वयैव प्रस्ताव उद्भावित इति सन्तुष्यामि । इदं पुनरिहावगच्छ । एकत्र दुष्टोदाहरणे दोषान्तरमपि वर्तत इत्येतावता न तयोः पार्थक्यं विहन्यते । क्वचित्तेषामसङ्कीर्णस्योदाहरणस्य सम्भवश्चास्ति। साङ्कर्यसम्भवेपि स्वरूपस्य भेदेन भेदाङ्गीकरणमावश्यकमेव भवति।

रामः—असङ्कीर्णं बाधोदाहरणं सम्भवतिचेत् प्रदर्श्यताम् । अनायासत एव वीतशङ्को भवेयम् ।

कृष्णः—'उत्पत्तिकाले घटो गन्धवान्—पृथिवीत्वात्' इत्यत्र व्यभिचारस्वरूपासिद्धी न स्तः । बाधस्तु वर्तते ।

रामः—सत्यमेतत् । 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठती' ति तार्किकाणां समय इति श्रुतंतावत् ।

कृष्णः—क्वचित्पुनः पञ्चाप्येते हेतुदोषास्सम्मिलन्ति। यथा—'वायुर्गन्धवान् स्नेहात्' इत्यत्र। स्नेहस्य गन्धाभाववति जले वर्तमानत्वाद्व्यभिचारः। स्नेहस्य गन्धाभावसाधकत्वाद्विरोधः। वायौ गन्धाभावसाधकस्य वायुत्वादेर्हेत्वन्तरस्य सत्त्वात् सत्प्रतिपक्षता। वायौ स्नेहाभावादसिद्धिः। गन्धाभावाद्बाधश्च। एवमन्येषामपि पार्थक्यसाङ्कर्यादिकं स्वयमालोच्य बोध्यमिति विस्तरभिया विरमामि।

रामः—सखे! स्वल्पीयसी काचिदियमाशङ्का। 'स्नेहस्य गन्धाभाववति जले वर्तमानत्वाद्व्यभिचारः' इत्युक्तं हि भवता। कथमिदमुपपद्यते? जले गन्धोऽनुभूयत एव ननु। "अभ्यषिञ्चन्नरघ्यार्घ्यं प्रसन्नेन सुगन्धिना। सलिलेन" इति महर्षेरादिकवेस्सूक्तिश्च स्मर्यते। एवं 'वायौ गन्धाभावसाधकस्य सत्त्वात् सत्प्रतिपक्षता' इत्युक्तम्; सुरभिर्वायु' रित्यादिप्रयोगशतसत्त्वात् वायौ गन्धानुभवाच्च नैतदपि युज्यते इति।

कृष्णः—जलवाय्वोर्गन्धोपलब्धिः पृथिवीसम्पर्कात्; न तु तयोस्स्वाभाविकगन्धवत्त्वादिति विद्धि।

रामः—(विमृश्य) उपपद्यते। एवमेतत्।

कृष्णः—इतःपरमुपमितिं निरूपयामि, शृणु। प्रत्यक्षानुमितिशाब्दबोधानामज्ञातवस्तुज्ञापकत्वं विद्यते। उपमितिस्तु न किञ्चिदपूर्वं वस्तु विषयीकरोति। किन्तु तस्याः पदशक्तिग्राहकत्वमेवेति उपमितेरसाधारणं स्वरूपमेतत्।

रामः—का नाम पदशक्तिः?

कृष्णः—अस्य पदस्य अयमर्थ इति सङ्केतः पदशक्तिः। सा च पदतदर्थयोस्सम्बन्धमात्रम्। व्याकरणवृद्धव्यवहारादयस्सन्ति

यद्ववश्शक्तिग्रहस्योपायाः । " शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥ " इति ह्यभ्यधायि । [ विवृतेः—व्याख्यानादित्यर्थः । सिद्धपदस्य—ज्ञातार्थकपदस्येत्यर्थः । ] तेषु च शक्तिग्रहोपायेषु अन्यतममिदमुपमानं पृथक्प्रमाणतया परिगणितं नैयायिकैः ।

रामः—वैशेषिकमते तु उपमानस्य शब्दस्य च पृथक्प्रमाणता नास्ति ; तयोरनुमानेन गतार्थत्वं ते वदन्ति । सांख्ययोगयोरपि नास्त्युपमानस्य पृथक्प्रमाणत्वमित्यवगतचरमेतन्मम । तदस्तु । उपमानं सादृश्यज्ञानमिति प्रागुक्तमास्ते । सम्प्रत्युपमित्युत्पत्तेः परिपाटी प्रदर्श्यताम् ।

कृष्णः—अस्ति गवयादिपदानां कश्चिदर्थ इति जानन् , इदन्तया तदजानानश्च अनीक्षितपूर्वगवयो ग्रामीणः पुरुषः कोपि आरण्यकस्य कस्यचिन्मुखात् ' गोसदृशो गवय ' इति वाक्यं निशम्यावधारयति । ततो यदृच्छया कदाचित्काननं प्रविष्टस्तत्र गोसदृशं जन्तुविशेषमालोकयति । तदानीमारण्यमुखादवधारितपूर्वं वाक्यं स्मरन्नेतादृशावयवसंस्थानसहित एव जन्तुर्गवयपदवाच्य इति निश्चिनोति च । अयमेव निश्चय उपमितिरुच्यते ।

रामः—गोसदृशो गवय इति वाक्यमतिदेशवाक्यं वा ?

कृष्णः—आम् । गोधर्मान् गवये अतिदिशति खलु तद्वाक्यम् ।

रामः—उपरिष्टादुच्यताम् ।

कृष्णः—उपमितिविषये विशेषतो नास्ति वक्तव्यम् । संग्रहेणैवोपसंहरेयम् । अरण्यं गतस्य ग्रामीणस्य यत्सादृश्यदर्शनं तदुप

मितौ करणम् । पूर्वावधृतवाक्यार्थस्य स्मरणं व्यापारः । गवयो गवयपदवाच्य इति ज्ञानात्मिकोपमितिः फलम् । 'अयं गवयपदवाच्य' इति तु नोपमितेः स्वरूपं भवितुमर्हति । तथा सति तस्य गवयान्तरे तदानीं शक्तिज्ञानानुदयः प्रसज्येत । नचायमर्थोऽनुभवेन संवदतीति ।

रामः – उपमितिविषय उपसंहृत इव । इतःपरं शाब्दबोधमधिकृत्य निगद्यताम् ।

कृष्णः—शब्दज्ञानं शाब्दबोधे करणम् । शक्तिलक्षणाभ्यां जायमाना पदार्थोपस्थितिर्व्यापारः । परस्परान्वितविशिष्टवाक्यार्थबोधात्मकः शाब्दबोधः फलम् । "पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीस्सहकारिणी ॥" इति कारिका ।

रामः—शक्तिर्नाम का ?

कृष्णः—अस्मात्पदादयमर्थो बोद्धव्य इति सङ्केतश्शक्तिः । घटपदस्य कम्बुग्रीवादिमति व्यक्तिविशेषे शक्तिः । गोपदस्य सास्नालाङ्गूलादिमत्यां व्यक्त्याम् ।

रामः—शक्तिग्रहः कथं जायते ?

कृष्णः—व्याकरणात् कोशात् वृद्धव्यवहारात् अन्यतश्च जायते शक्तिग्रहः ।

रामः—शक्तमिति शक्यमिति पदद्वयमस्ति खलु । कोऽर्थः ?

कृष्णः—यत्पदं यमर्थं शक्त्या बोधयति, तत्तस्मिन् शक्तमित्युच्यते । सोऽर्थस्तस्य पदस्य शक्यः ।

रामः—लक्षणा नाम का ?

कृष्णः—यत्र पुनर्वक्तृतात्पर्यमनुरुद्ध्य शक्यार्थसम्बद्धः कश्चिदन्योर्थः प्रतीयते, तत्र लक्षणा । तथा च शक्यसम्बन्धो लक्षणेत्यायाति । यथा—'गङ्गायां घोष' इत्यादौ गङ्गापदस्य शक्यस्तत्प्रवाहः । वस्तुतस्तु तत्र न तात्पर्यम् । तत्सम्बन्धिनि गङ्गातीरे तात्पर्यम् । अतश्च गङ्गापदस्य गङ्गातीरे लक्षणा - इत्युच्यते ।

रामः—किमेतत् ? तरङ्गसम्मर्दप्रयुक्तघोषो गङ्गाप्रवाह एव खलु सम्भवितुमर्हति । शक्यार्थमुपेक्ष्य अन्यत्र धावनं व्यर्थमेव खलु ।

कृष्णः—हन्त भोः ! घोषो नाम शब्दकोलाहलविशेष इति त्वया गृहीतमिव । " घोष अभीरपल्ली स्यात् " इत्यमरकोशं स्मर तावत् ।

रामः—तथा वा ? प्रसीद प्रियमित्र! । लक्षणायाः किं बीजमिति जिज्ञासे ।

कृष्णः—अन्वयानुपपत्तिर्लक्षणाबीजमिति वदन्ति ।

रामः – नैतदहं जाने सम्यगिव । विव्रियतां कृपया ।

कृष्णः—' गङ्गायां घोष ' इत्यादावाभीरपल्लीरूपस्य घोषपदार्थस्य गङ्गापदशक्ये प्रवाहे वृत्त्यसम्भवेन तत्रान्वयानुपपत्तिसद्भावात् गङ्गापदस्य गङ्गातीरे लक्षणा कल्प्यते । एतादृशान्वयानुपपत्तिरेव लक्षणाबीजमिति वदन्ति ।

रामः—अत्र मे काचन शङ्का जायते । ' यष्टीः प्रवेशय ' इत्यादौ दण्डवाचकयष्टिपदस्य दण्डधरे खलु लक्षणां कल्पयन्ति । अत्र अन्वयानुपपत्तिः कथं सुवचा ? । दण्डानां प्रवेशनकर्मत्वासम्भवे सति हि अन्वयानुपपत्तिस्सुवचा स्यात् । दण्डानामपि प्रवेशनकर्मत्वसम्भवेन तत्र दण्डधरे कल्प्यमानाया लक्षणाया अन्व-

यानुपपत्तिरूपं बीजं न सम्भवितुमर्हति खलु इति ।

कृष्णः—विवेचनविचक्षणोसि भोः!, सन्तुष्यामि । 'अन्वयानुपपत्तिर्लक्षणाबीजमिति वदन्ति ' इत्येव खलु मया प्रोक्तम् । भवदुद्घाटिता शङ्का युज्यत एव । क्वचिदेवान्वयानुपपत्तिर्लक्षणाबीजं भवितुमर्हति । सर्वत्रापि तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वं युक्तरूपम् ।

रामः—युज्यत एतत् । तात्पर्यानुपपत्तिस्तु ' गङ्गायां घोष ' इत्याद्यन्वयानुपपत्तिस्थलेपि जागर्तीति तस्यास्सार्वत्रिकत्वं सम्प्रतिपद्यत एव ।

कृष्णः—इदमवधेहि । तात्पर्यं नाम वक्तुरिच्छा । तात्पर्यज्ञानं सर्वत्र शाब्दबोधे कारणम् । सैन्धवमानयेत्युक्ते भोजनप्रकरणे लवणस्य, यात्राप्रकरणे तुरगस्य च नियतो बोधस्तात्पर्यज्ञानमन्तरेण न निर्वहति । अतस्तादृशेषु बहुषु स्थलेष्वपेक्षितं तात्पर्यज्ञानं लाघवात् शाब्दबोधसामान्ये कारणमित्यभ्युपगमोपि न्याय्य एव ।

रामः— अथ व्यञ्जनामधिकृत्य न वक्तव्यं वा ?

कृष्णः—व्यञ्जना तु न शब्दव्यापारः । किंत्वनुमानेन लक्षणया च गतार्थेति तार्किकाणां मतम् ।

रामः—शाब्दबोधे सहकारितया कानिकान्यपेक्ष्यन्ते ?

कृष्णः—आसत्तिः, योग्यता, आकाङ्क्षा, इत्येता अपि शाब्दबोधे सहकारितयाऽपेक्ष्यन्ते ।

रामः—आसत्तिर्नाम का ? ।

कृष्णः—येषामर्थानामन्वयः-परस्परसम्बन्धः तात्पर्यविषयो भवति, तद्बोधकानां पदानामव्यवधानमेव आसत्तिरित्यभिधीयते।

रामः—व्यवधानस्य का नाम प्रसक्तिः ?

कृष्णः—शृणु तावत् । व्यवधानं नाम असान्निध्यम् । तच्च द्वेधा सम्भवति । मध्ये पदान्तरप्रवेशात्, उच्चारणकालविलम्बाच्च ।

रामः—मध्ये पदान्तरप्रवेशादासत्तिभङ्गस्योदाहरणं प्रदर्श्यताम् ।

कृष्णः—इदमपि मया प्रदर्शनीयं किम् ? 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादिकं यथेच्छं सम्भवितुमर्हति । गिरिरग्निमान्, देवदत्तेन भुक्तम् इतितावद्वक्तुस्तात्पर्यम् । एवम्, प्रभाते 'गाम्' इत्युक्त्वा मध्याह्ने 'आनय' इत्युक्तेऽपि गवानयनविषयको बोधो न जायत इति कालविलम्बस्येदमुदाहरणम् ।

रामः—उच्चारणे विलम्बो व्यवधानं वा भवतु ; पदार्थोपस्थितावव्यवधानमेव शाब्दबोधायापेक्ष्यत इति कथनमुचितम् ।

कृष्णः—एवमप्याहुस्तार्किकाः ।

रामः—अथ योग्यता विव्रियताम् ।

कृष्णः—ययोरर्थयोस्सम्बन्धो विवक्ष्यते, तयोर्वस्तुतस्सम्बन्धसत्त्वं योग्यता ।

रामः—योग्यताया अभावे शाब्दबोधो नोत्पद्यते वा ?

कृष्णः—नोत्पद्यत इत्येव तार्किका मन्यन्ते । यथा वह्निना सिञ्चतीत्यादौ । वह्निकरणकत्वं सेचने नास्तीति तत्र योग्यताया असत्त्वं विद्धि । तथा च "मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ॥" इत्यादीनां तार्किकमते बोधकत्वमेव नास्ति । तदर्थानामप्रसिद्धतया तत्सम्बन्धस्य सुतरामभावात् ।

रामः—"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति स्वीकुर्वन्तो योग्यतायाश्शाब्दबोधहेतुतां नाभिलषन्तीति द्योत-

यितुमेव भवता ' तार्किकमते ' इति विशिष्य व्याह्रियत इति प्रतिपद्ये । अस्तु । अथ आकाङ्क्षा विव्रियताम् ।

कृष्णः—प्रकृतिप्रत्यययोस्समभिव्याहारविशेष एव आकाङ्क्षा । घटवृत्तिकर्मत्वमिति बोधं प्रति ' घटम्, घटौ, घटान् ' इत्यादीनामेव हेतुत्वम् । न तु विपरीततया ' अम् घट ' इत्याद्युच्चारणे तादृशो बोधस्समुदेति । एवं घटः कर्मत्वमिति पदाभ्यां घट—पदार्थकर्मत्वपदार्थयोरुपस्थितौ सत्यामपि पूर्वोक्तो बोधो न जायते। अतो घटवृत्ति कर्मत्वमिति बोधे घटपदाव्यवहितोत्तरद्वितीयाविभक्तिः कारणम् । एवं स्थलान्तरेष्वप्याकांक्षाया हेतुत्वं द्रष्टव्यम् ।

रामः—अथेदानीं तार्किकाणामभिमतां बोधरीतिमपि किञ्चिद्विवृणोतु भवानित्यर्थये ।

कृष्णः—तथैव विवृणोमि । सति सम्भवे प्रथमान्तस्यैव शाब्दबोधे प्राधान्यमभ्युपगच्छन्ति तार्किकाः । न तु वैयाकरणा इव धात्वर्थस्य प्राधान्यम् ।

रामः—यत्र तु भावतिङन्तादिस्थले ' रामेण भूयते ' इत्यादौ प्रथमान्तं पदं नास्ति, तत्र किं कुर्वन्ति तार्किकाः ?

कृष्णः—तत्रतावदगत्या धात्वर्थस्य प्राधान्यमङ्गीकृतं तैः । अत एव ' सति सम्भवे ' इत्युक्तमादावेव मया ।

रामः—अस्तु । रामो गच्छतीति वाक्याद्यादृशो बोधस्तार्किकाणामभिमतः, सोयं विव्रियताम् ।

कृष्णः—शृणु सखे । गम्धातोरुत्तरदेशसंयोगानुकूलव्यापारोऽर्थः । तिङः कर्तृत्वम् ; तच्च कृतिपर्यवसितम् अर्थः । व्यापारस्य जनकतासम्बन्धेन कृतावन्वयः । तिङो लट्त्वेन रूपेण वर्तमानकालोप्यर्थः । स च कृतावाश्रयतयाऽन्वेति । तथाच उत्तरदेश-

संयोगानुकूलव्यापारजनक, वर्तमानकालवृत्ति, कृतिमान् रामः इति बोधः । व्यापारो देहचलनादिः, तज्जनिका कृतिरात्मवृत्तिः प्रयत्नः ।

रामः—रथो गच्छतीत्यादिस्थलेषु न खलु कृतिस्सम्भवत्यचेतने रथादौ । तत्र कथं बोधः ?

कृष्णः सत्यम् । तत्र कृतेरसम्भवादाश्रयत्वे तिङो लक्षणां स्वीकुर्वन्ति । उत्तरदेशसंयोगानुकूलव्यापाराश्रयो रथ इत्येव भवति बोधः ।

रामः—रामः करोतीत्यादिस्थलेषु कृतेर्धातुनैवाभिधानात् तत्रापि तिङः कृत्यर्थकत्वाभिधानं नोपपद्यते खलु । तर्हि तिङस्तत्र कोऽर्थः ?

कृष्णः—आश्रयत्वमेव तिङो लक्ष्यार्थस्तत्र । कृत्याश्रयो राम इति शाब्दबोधः ।

रामः —रामो ग्रामं गच्छतीत्यादिषु सकर्मकस्थलेषु बोधरीतिः कीदृशी ?

कृष्णः—तत्र ग्रामपदोत्तरद्वितीयाया वर्तित्वमर्थः । तस्य धात्वर्थसंयोगेऽन्वयः । तथा च, ग्रामवृत्तिसंयोगानुकूलव्यापारजनकवर्तमानकालवृत्तिकृतिमान् राम इति बोधः ।

रामः—द्वितीयायाः कर्मत्वमर्थ इति श्रुतचरं मया । किमन्यदुच्यते भवता ?

कृष्णः—द्वितीयाया यद्यपि कर्मत्वमर्थः ; तथापि कर्मत्वघटकानां पदार्थान्तराणामन्यतोलाभाद्वर्तित्वमेव फलितो द्वितीयार्थः ।

रामः—रामेण गम्यते ग्राम इत्यत्र कथं बोधः ?

कृष्णः—तत्र कृतिजन्यत्वं तृतीयार्थः। कर्मप्रत्ययसमभिव्याहारे च धातुतो व्यापारजन्यं फलं प्रधानतया भासते। न तु फलानुकूलो व्यापारः। कर्मतिङ आश्रयत्वमर्थः। तथा च रामकृतिजन्यव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः।

रामः—मध्ये कश्चन संशयो मम। गम्धातुरकर्मक इति धातुपाठादिषु पश्यामि। उपाध्यायाश्च तथैव शिक्षयन्ति। ग्रामं गच्छति राम इत्यादिप्रयोगपरामर्शे तु गमेस्सकर्मकताप्यस्तीत्यवगम्यते। किमत्र तत्त्वं इति।

कृष्णः—इदमवधेहि। गम्धातोरुत्तरदेशसंयोगः, उत्तरदेशसंयोगानुकूलव्यापारश्चेत्युभयमर्थः। यत्र ह्युत्तरदेशसंयोगविवक्षा, तत्र सकर्मकता। यत्र चोत्तरदेशसंयोगानुकूलव्यापारमात्रविवक्षा, तत्र अकर्मकता। रामो ग्रामं जगामेति प्रयोगे उत्तरदेशसंयोगानुकूलव्यापारमात्रविवक्षायां सत्यां, अकर्मकत्वमेव ग्राह्यम्। ग्राममिति श्रूयमाणस्य कर्मपदस्य का गतिरिति चेत्, ग्राममुद्दिश्येत्येव तत्रार्थः। तथा च कर्मत्वं गमने नान्वेति। रामो ग्रामं जगामेत्यस्मिन्नेव प्रयोगे उत्तरदेशसंयोगरूपफलविवक्षा चेदस्ति, तदा ग्रामं प्रापदित्यादाविव सकर्मकता निराबाधा। अतश्च गमेरकर्मकत्वसकर्मकत्वे वैवक्षिके भवतः।

रामः—प्रसन्नोस्मि। उपरिष्टादुच्यतां वक्तव्यम्।

कृष्णः—रामेण स्थीयत इत्यादौ धात्वर्थस्यैव प्राधान्येन भानाद्रामकृतिजन्यो गतिनिवृत्त्यनुकूलव्यापारोऽर्थः।

रामः—रामो न गच्छतीत्यत्र कथम् ?

कृष्णः—तत्र नञोऽत्यन्ताभावोऽर्थः । तस्मिन् गमनानुकूलकृतेः प्रतियोगितयाऽन्वयः । अभावस्याश्रयतासम्बन्धेन रामेऽन्वयः । तथा च गमनजनककृत्यभाववान् राम इति बोधः ।

रामः—घटो न पट इत्यत्र तु ?

कृष्णः—तत्र नञोऽन्योन्याभावोऽर्थः । तस्मिन् पटस्य प्रतियोगितयाऽन्वयः । अन्योन्याभावस्य घटे वृत्तितयाऽन्वयः । एवञ्च पटप्रतियोगिकान्योन्याभावाश्रयो घट इति भवति बोधः ।

रामः—बोधे नञर्थस्यैव प्राधान्यं न सम्भवति वा ?

कृष्णः—सम्भवति क्वचित् । यथा भूतले न घट इत्यादौ । तत्र नञोऽत्यन्ताभावोऽर्थः । तस्मिन् प्रतियोगितया घटस्यान्वयः । भूतलपदोत्तरसप्तम्या वर्तित्वमर्थः । तथाच भूतलवृत्तिर्घटात्यन्ताभाव इति नञर्थप्रधानो बोध इति विद्धि । सखे ! राम !, अथ प्रमाभ्रमसंशयानधिकृत्य तुभ्यं किञ्चिदुपदेष्टुमिच्छामि । शृणु सावधानः ।

रामः—अवहितोस्मि । उपदिशतु महाभागः ।

कृष्णः—भूतलं घटवत्, पर्वतो वह्निमान् इत्यादिषु ज्ञानेषु त्रयोंशा अवश्यं विषयीभवन्ति । विशेष्यं विशेषणं तयोस्सम्बन्धश्च। भूतलं घटवदिति ज्ञाने भूतलं विशेष्यम्, घटो विशेषणम् । संयोगः सम्बन्धः ।

रामः—प्रकार इति विशेषणमिति च पर्यायो वा ?

कृष्णः—आम् । विशेषणस्य प्रकार इति संज्ञान्तरमस्ति । तथाच भूतलं घटवदिति ज्ञानं भूतलविशेष्यकं घटप्रकारकं च भवति ।

रामः—अस्तु । उपरिष्टादभिधीयताम् ।

कृष्णः—येन सम्बन्धेन यद्वस्तु यस्मिन् विशेषणतया भासते, तेन सम्बन्धेन तद्वस्तु तत्र यदि वर्तते तर्हि तत् ज्ञानं प्रमा भवति। एवञ्च भूतले संयोगेन घटसद्भावदशायां भूतलं घटवदिति ज्ञानं प्रमा भवति। तदभावदशायां तज्ज्ञानं भ्रम इत्युच्यते।

रामः—येन सम्बन्धेन यद्वस्तु यस्मिन् विशेषणतया भासते तेन सम्बन्धेन तद्वस्तु तत्र नास्तिचेत् तज्ज्ञानं भ्रम इति विवक्षितं वा?

कृष्णः—तथैव। शंखः पीत इति ज्ञानं भ्रमो भवति खलु। न हि शंखे प्रतीयमानं पीतरूपं तत्र वस्तुतो विद्यते।

रामः—शुक्लरूपे शंखे पीतत्वबुद्धिः कथमिव जायते?

कृष्णः—पित्तादिदोषेण प्रत्यक्षं भ्रमरूपं भवति। हेत्वाभासेन जायमाना अनुमितिश्च भ्रमरूपा। शाब्दबोधःपुन राप्तवाक्याज्जायमानः प्रमा भवति। अनाप्तवाक्यात्तु भ्रमः। वैदिकशब्दजातं सर्वमेव प्रमां जनयति; वेदस्य आप्तशिखामणिनेश्वरेण प्रोक्तत्वात्—इति तार्किकाणां मतम्।

रामः—प्रमाभ्रमयोर्व्यपदेशान्तरमपि विद्यते वा?

कृष्णः—प्रमाया यथार्थज्ञानमिति, भ्रमस्याऽयथार्थज्ञानमिति च व्यपदेशान्तरं विद्यते।

रामः—संशयमधिकृत्य व्याह्रियताम्।

कृष्णः—एकस्मिन्नेव विशेष्ये यत्र भावाभावौ विशेषणतया भासेते तज्ज्ञानं संशय इति कथ्यते। भूतलं घटवद्वा नवा इति ज्ञानं संशयः। तत्र हि भूतले घटस्तदभावश्च विशेषणतया भासत इति।

रामः—प्रियमहाभाग! द्रव्याणां नित्यत्वानित्यत्वभेदः प्रा-

मेव श्रीमता प्रत्यपादि । अवशिष्टोप्यवान्तरभेदः किञ्चिदिदानीं प्रस्तूयताम् ।

कृष्णः—पृथिव्यादीनां चतुर्णां द्रव्याणां परमाणवो नित्या इति तत उत्पन्नानीतराणि सर्वाण्यपि द्रव्यजातान्यनित्यानीति च प्रत्यपादि किल । अनित्यस्य पृथिव्यादिचतुष्टयस्य शरीरमिन्द्रियं विषय इति त्रिविधो वर्तते भेदः ।

रामः—विवरणं प्रार्थये स्पष्टीभावाय ।

कृष्णः—अस्मदादीनां शरीरं पृथिवीशरीरम् । नासाग्रे वर्तमाने गन्धज्ञाने सहकारि घ्राणं पार्थिवमिन्द्रियम् । अन्या सर्वापि पृथिवी जीवानां भोग्यभूता विषयश्च भवति ।

रामः—अस्माकं शरीरं पञ्चभिरपि भूतैर्जायते खलु । तर्हि पार्थिवमात्रं कथमभिधीयते ?

कृष्णः—सत्यम् । पृथिव्यंशस्याधिकतया पार्थिवत्वव्यपदेशः । एवं शरीरान्तराणामपि तत्तत्प्राचुर्यात्तत्तद्रूपता बोध्या ।

रामः—साधु । उपरिष्टादभिधीयताम् ।

कृष्णः—वरुणलोके विद्यमानानां देवविशेषाणां शरीरं जलशरीरमिति वदन्ति । जिह्वाग्रे वर्तमानं रसग्रहणं जनयच्च इन्द्रियं जलसम्बन्धीन्द्रियम् । इतरत्सर्वं जलं विषयः । सूर्यलोके तैजसं शरीरम् । रूपग्राहकं कनीनिकाग्रवर्ति नयनमिन्द्रियं तेजस्सम्बन्धि । अन्यत्तेजस्सर्वं विषयः । पिशाचादीनां शरीरं वायवीयम् । स्पर्शग्रहणे कारणं सर्वशरीरव्यापिनी त्वक् । वायुसम्बन्धीन्द्रियम् । अन्यस्सर्वो वायुर्विषयः । शरीरान्तर्भागे तत्र तत्र व्याप्रियमाणानां वायूनामेव प्राणापानसंज्ञेति न तेषां पृथग्द्रव्यत्वमाशङ्कनीयम् ।

रामः—आकाशकालदिक्षु अवान्तरभेदः कथ्यताम् ।

कृष्णः—आकाशकालदिशामेकत्वेन अवान्तरभेद एव नास्ति ।

रामः—वर्तमानकालादिव्यवहारः प्राचीप्रतीच्यादिव्यवहारश्च भवति खलु ।

कृष्णः—भवत्येव । स च घटाकाशादिव्यवहारवदेव उपाधिकृतत्वेन समर्थनीयः ।

रामः—युज्यते । आत्मानमधिकृत्य व्याह्रियताम् ।

कृष्णः—आत्मा द्विधा । जीवः परश्च । जीवः प्रतिशरीरं विभिन्नो भवतीति तस्याऽसंख्येयत्वमेव । परमात्मा तु सर्वज्ञस्सर्वशक्त ईश्वराभिधान एक एव । मनश्च प्रतिशरीरं भिद्यत इति तस्याप्यसंख्यत्वम् । एकस्मिन् क्षणे बहूनां वस्तूनां ज्ञानं नोदेतीत्यतो मनसोऽणुत्वं स्वीकुर्वन्ति । यदा मनो येनेन्द्रियेण सम्बध्यते तदा तेन केवलं ज्ञानं जन्यते नान्येनेति ज्ञानयौगपद्यस्याऽसम्भवः ।

रामः—शतावधानादिकरणे एकस्मिन् क्षणे सकलज्ञानमुत्पद्यते खलु ।

कृष्णः—तत्रापि नैवैकस्मिन् क्षणे सकलज्ञानमुत्पद्यते । किन्तु झटितितमां ज्ञानोत्पत्त्या कालभेदस्यानुपलम्भमात्रमिति च समाधानमुद्भावयन्ति ।

रामः—परमाणुभ्यः पृथिव्यादीनां स्थूलवस्तूनां कथमुत्पत्तिः ?

कृष्णः—प्राणिनामदृष्टवशेन भगवदिच्छया प्रेर्यमाणेषु परमाणुषु क्रिया सञ्जायते । तदा परमाणुद्वयस्य संयोगे द्व्यणुकमुत्पद्यते । त्रयाणां द्व्यणुकानां सम्मेलनेन त्र्यणुकमुत्पद्यते । एवं चतुरणुयपञ्चाणुकादिक्रमेण स्थूला घटादयो निष्पद्यन्ते ।

रामः—एतेषु केषां केषां प्रत्यक्षविषयत्वम् ? केषां च न ?

कृष्णः—परमाणुद्व्यणुकं च न प्रत्यक्षयोग्यतां विन्देते। त्र्यणुकं तु चक्षुषा ग्रहीतुं शक्येषु वस्तुषु तनिष्ठमिति च तार्किकाणां सिद्धान्तः। गवाक्षमार्गेण प्रविशति मार्तण्डमयूखे यत्सूक्ष्मतमं रेणुशकलमुपलक्ष्यते तत् त्र्यणुकमिति संज्ञया व्यपदिश्यते। तच्च षड्भिः परमाणुभिस्संघटितमिति तस्य षष्ठोंशः परमाणुरितिसमायाति।

रामः—पूर्वमनुक्तान् अवश्यवक्तव्यांश्च गुणभेदानधिकृत्य वक्तव्यमित्यर्थये।

कृष्णः—तथा हि शृणु तावत्। गुणेषु प्रथमं रूपं—शुक्लं नीलं पीतं रक्तं हरितं कपिशं चित्रमिति सप्तविधम्। पृथिव्यां सर्वं रूपं वर्तते। जलतेजसोस्तु शुक्लमात्रम्। जले वर्तमानमभास्वरम्, तेजसि पुनर्भास्वरं तदिति भेदः।

रामः—भास्वर इत्युक्ते कोऽर्थः?

कृष्णः—योऽन्यं प्रकाशयति, स भास्वरः।

रामः—उपरिष्टादुच्यतां रसमधिकृत्य।

कृष्णः—रसस्तु, मधुरः आम्लः लवणः कटुः कषायः तिक्त इति षोढा। पृथिव्यां सर्वोप्यस्ति रसः। जले तु मधुरो रस इति तार्किका वदन्ति। गन्धस्सुरभिरसुरभिश्चेति द्विधा। स च पृथिव्यामेव वर्तते।

रामः—पृथिव्यामेवेति सावधारणमभिदधता प्रियसुहृदा शङ्का काचिदुत्थाप्यते। सुगन्धि सलिलमिति प्रतीतिर्दृष्टा वा ? "अभ्यषिञ्चन्नरव्याघ्रं—सलिलेन सुगन्धिना" इति वाल्मीकिर्मुनिवरोपि कथयति। सलिलस्यापि गन्धवत्त्वे शास्त्रतः प्रत्यक्षतश्च प्रतीयमाने पृथिव्यामेवेत्यवधारणं कथमुपपद्यत इति।

कृष्णः—समाहितचरमेतत् । वस्त्वन्तरे गन्धप्रतीतिः पृथिवीसंपर्कादेव जायत इति ।

रामः—युज्यते । अथ स्पर्शमधिकृत्योच्यताम् ।

कृष्णः—स्पर्शः–शीतः उष्णः अनुष्णाशीत इति त्रिधा । शीतस्पर्शो जले । उष्णस्तेजसि । पृथिव्यां वायौ चानुष्णाशीतस्पर्शः।

परिमाणं चतुर्विधम्–अणुत्वं महत्त्वम् ह्रस्वत्वम् दीर्घत्वं चेति । इदं च सर्वेषु द्रव्येषु वर्तते । विभुषु विद्यमानस्य महत्त्वस्य परममहत्परिमाणमिति व्यपदेशश्च भवति ।

अथ प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्चेति यत्नस्त्रिविधो भवति । आद्यौ यथासंख्यं 'प्रवर्तते—निवर्तते' इति प्रतीतिविषयौ । श्वासोच्छ्वासाद्युपयोगी परोक्षश्च जीवनयोनिर्नाम प्रयत्नः ।

संस्कारस्त्रिविधो भवति—वेगः स्थितस्थापकः भावना च । तत्र वेगः क्रियया जन्यते । स च मूर्तेषु सर्वेषु तिष्ठति । क्रियाशैघ्र्यं प्रति स निमित्तं सम्पद्यते च । अन्यथाकृतस्य वृक्षशाखादेः पूर्वावस्थासम्पादकः स्थितस्थापकः । स पृथिव्यामेव । अनुभवाज्जायमानः स्मृतिं प्रत्युपयोगी च संस्कारो भावना । तस्याधिकरणमात्मैव ।

यज्जन्यं तदनित्यमिति सिद्धान्तात् गुणेषु यद्यज्जायमानं दृश्यते तत्सर्वमनित्यम् । तथाच अवयवगुणादवयविनि जन्यमानस्सर्वो गुणो नश्वरः । आश्रयस्य नाशाच्च गुणानां नाशो भवति । अतोऽनित्यद्रव्याश्रितानां सर्वेषामेवाश्रयनाशेनाऽनित्यत्वम् ।

रामः—पार्थिवपरमाणुगतानां रूपरसगन्धस्पर्शानां नित्यत्वं वा अनित्यत्वं वा ?

कृष्णः—परमाणुषु पुनः पार्थिवेषु पाकेन रूपादिपरिवृत्तेः

स्वीकारात् तद्गतानां रूपरसगन्धस्पर्शानामनित्यत्वमेव । जलतेजो-वायुपरमाणुवृत्तीनां तु रूपादीनां चतुर्णां नित्यत्वमेव । एवं तद्ग-तानां स्नेहद्रवत्वादीनामपि नित्यत्वम् । नित्यद्रव्येषु वर्तमाना एक-त्वसंख्या, परिमाणम्, पृथक्त्वमित्येतानि नित्यानि । परमात्म-वृत्तयो ज्ञानेच्छाकृतयो नित्याः । इतरे गुणा अनित्या इति नित्य-त्वानित्यत्वविवेकः ।

रामः—गुणेष्वेवं नित्यत्वानित्यत्वभेदमन्तरेण किं नान्यः कोऽपि भेदो वर्तते ?

कृष्णः—गुणेषु कतिपये विशेषगुणा इति कथ्यन्ते । यदाहुः "रूपं गन्धो रसः स्पर्शः स्नेहस्सांसिद्धिको द्रवः । बुद्ध्यादिभाव-नान्ताश्च शब्दो वैशेषिका गुणाः" इति ।

रामः—"बुद्ध्यादिभावनान्ता" इत्येतद्विव्रियताम् ।

कृष्णः—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा इति यावत् । इतरे गुणास्सामान्यगुणा इति व्यवह्रियन्ते । तत्तद्द्रव्य-वृत्तीनां गुणानामियत्तया परिच्छेदकं प्राचां वचनं चैदमवधेहि— "वायोर्नवैकादश तेजसो गुणाः जलक्षितिप्राणभृतां चतुर्दश । दि-क्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च ॥"

रामः—सखे ! अहमतीव भाग्यशाली भवामि । भवानपि परमकारुणिकः । गहनतमान् शास्त्रार्थान् अनायासेन वेदितुं मम भाग्यमभवत् । अकपटं बोधयितुं च भवतः करुणा समजनि । अ-तीव सन्तोषो मे भवति सम्प्रति । इतोऽपि यदस्ति वक्तव्यं तद्भवा-नेव कृपया प्रतिपादयतु ।

कृष्णः—सन्ति तार्किकैस्स्वीकृतेषु पदार्थेषु कतिपये लौकि-कानामगोचराः शास्त्रवासनया केवलं वेदनीयाश्च । घटस्य तद्वृत्ति-

रूपस्य च भिन्नतां, तयोः कमपि सम्बन्धं च न कोऽपि लौकिकः स्वयमनुभवेन जानाति । एवं सन्त्यन्येऽप्यंशाः साधारणानामनुभवस्याऽविषयाः । विशिष्य चायं विशेषपदार्थः शास्त्रभावनामात्रकल्पित इति विभावनीयम् । तमधिकृत्य किञ्चिद्विवक्षितमस्ति मम ।

रामः—महाननुग्रहः । उच्यताम् ।

कृष्णः—घटादिद्रव्याणां परस्परं भेदो यद्यनुमित्स्यते, तदा तदवयवभेदेनैवानुमातुं शक्यते । एवं क्रमशस्सूक्ष्मद्रव्येष्ववतरणे 'एतत्त्र्यणुकं तस्मात् त्र्यणुकाद्भिद्यते ; एतद्द्व्यणुकसमारब्धत्वात् । एतद्द्व्यणुकं एतदद्व्यणुकाद्भिद्यते, एतत्परमाणुसमारब्धत्वात्' इत्यन्तमनुमानपरम्परा प्रसरति । तत्र परमाणूनां भेदस्यानिश्चये एतत्परमाणुस्तत्परमाणुरिति व्यवहारस्यैवानुदयेन कथं नाम तत्समारब्धत्वं हेतूकृत्य द्व्यणुकभेदस्साध्यताम् ? कथं च वा तदुपरितनानुमानानां प्रामाण्यं जायताम् ? अतः परमाणूनां भेदकः कश्चन धर्म आवश्यकः । तस्यैव विशेष इति नाम कल्पितम् ।

रामः—स किमेक एव ? उत भिन्नभिन्नः ?

कृष्णः—स च प्रत्येकं परमाणुषु भिन्नभिन्नः स्वीक्रियते । तस्य पुनरेतत्परमाणुवृत्तित्वं तत्परमाणुवृत्तित्वं भवति वा नवेति न शङ्कनीयम् । यतस्स स्वीक्रियमाणस्सन्नेव प्रत्येकवृत्तितया भिन्नभिन्नतया च स्वीकृतः ।

रामः—विशेषोऽयं परमाणुष्वेव केवलमस्ति किम् ?

कृष्णः—अन्येष्वपि नित्यद्रव्येष्वात्ममनःप्रभृतिषु वर्तते । नित्यद्रव्याणामसंख्येयतया विशेषाणामप्यसंख्येयत्वमिति च सिद्धान्तसरणिर्विशेषमङ्गीकुर्वताम् । विशेषाणां स्वत एव यथा परस्परं भेदस्स्वीक्रियते तथा नित्यद्रव्याणामेव भवन्विति विशेषं गलहस्तयन्तो नवीनाश्शिष्येषु करुणामिवात्मनो युक्तिवश्यतामपि विशदयन्तीत्यलमनया काकदन्तपरीक्षया ।

रामः—सखे ! साधर्म्यमधिकृत्येदानीं श्रोतुमिच्छामि । दर्शय किञ्चित् ।

कृष्णः—वच्मि शृणु तावत् । अयमप्येकः प्रकारः पदार्थ-व्युत्पादनस्य यदेतेषां साधर्म्यस्य कथनं नाम । बहुषु वस्तुषु समान-तया विद्यमानस्तदितरेष्वविद्यमानश्च धर्मः साधर्म्यमिति सङ्कीर्त्यते ।

रामः—उदाहरणं प्रदर्श्यताम् ।

कृष्णः—पश्यतु भवान् द्रव्याणां नवानां गुणवत्त्वं साधर्म्यम् । गुणवत्त्वं नवसु द्रव्येषु वर्तते । न चान्यस्मिन् वर्तत इति । एवं बहुषु स्थलेषु साधर्म्यं प्रदर्शयितुं शक्यते ।

रामः—द्रव्यगुणकर्मणां त्रयाणां किं साधर्म्यम् ?

कृष्णः—सत्तावत्त्वं तेषां साधर्म्यम् ; सत्ता नाम काचन जातिर्द्रव्यादिषु त्रिषु वर्तत इति तार्किकैरङ्गीकृतत्वात् ।

रामः—सा किमस्मादृशानामनुभवविषयो न भवति ?

कृष्णः—न भवत्येव । 'अस्ति' 'सन्' इत्यादिप्रतीतेस्सत्तारहितेष्वपि दर्शनेन सत्तायामनुभवाभावात् ।

रामः—गुणादीनां षण्णां किं साधर्म्यम् ?

कृष्णः—गुणशून्यत्वं क्रियाशून्यत्वं च तेषां साधर्म्यम् । द्रव्याणां समवायिकारणत्वं साधर्म्यम् ?

रामः—पञ्चानां भूतानां किं साधर्म्यम् ?

कृष्णः—सर्वेष्वपि भूतपदवाच्येषु बहिरिन्द्रियेण गृह्यमाणः कश्चन विशेषगुणो वर्तत इति बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं तेषां साधर्म्यम् । पृथिव्यां गन्धादेः, जले रसादेः, तेजसि रूपादेः, वायौ स्पर्शस्य, गगने शब्दस्य च तत्तद्बहिरिन्द्रियगृह्यमाणस्य सत्त्वात् साधर्म्यमिदं सङ्गच्छते ।

"तद्रव्याणां पञ्चानां क्रियावत्त्वम्, परत्वापरत्वे, वेगवत्त्वं चेति साधर्म्याणि। पृथिव्यादीनां चतुर्णां स्पर्शवत्त्वम्, त्रयाणां रूपवत्त्वम्, पृथिवीजलयोर्द्वयो रसवत्त्वञ्च समानो धर्मः। एवं वस्त्वन्तराणामपि साधर्म्यं स्वत एवोह्यतां भवता।

रामः—वैधर्म्यमधिकृत्य किं न वक्तव्यम्?

कृष्णः—उक्तप्रायमेव तत्। यो धर्मो येषां समानो धर्म इत्युक्तः स तदितरेषां वैधर्म्यं च भवति। "यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्" इति कारिकां च विद्धि। तथा हि—गुणवत्त्वं द्रव्याणां साधर्म्यमित्युक्तम्। तदेव गुणादीनां वैधर्म्यं भवति। वैधर्म्यं नाम विरुद्धो धर्मः। अविद्यमानो धर्म इति यावत्। समानामपि पदार्थानां समानधर्मतया व्यवह्रियमाणा ज्ञानविषयत्वादयस्तु न कस्यापि वैधर्म्यं भवन्ति। तदितरस्य कस्यचिद-भावात्।

रामः—सखे! आवयोस्सम्भाषणमद्य विरमत्वेतावतेति मन्ये। अथ यदि केचन स्युरत्यावश्यका वेदितव्या विषयास्तर्कशास्त्रानुबन्धिनः, तान् सारग्राहं संगृह्योपदिश्य, उपसंहरतु तत्रभवान्।

कृष्णः—सत्यं महान् कालो व्यतीतः। उपसंहरामि, शृणु तावदवहितः। धर्मस्य धर्मिणश्च पार्थक्येन मनसाकलनं तर्कशास्त्रस्य जीवितसर्वस्वमिति वक्तव्यं भवति। तयोः पार्थक्यमवबोधयितुं बहुतरः प्रयासस्तार्किकैरास्थितश्चास्ति। बहूनि तार्किकाणां निर्वचनानि पूर्वपक्षसिद्धान्तजालानि च धर्मधर्मिविवेकं विना काममशक्यावबोधान्येव। अतस्तत्र प्रत्येकमवधातव्यं जिज्ञासुभिस्तर्कतन्त्रस्य।

तार्किकाः किल लक्ष्ये लक्ष्यतां हेतौ हेतुतां साध्ये साध्यतां च तत्तद्धर्मिव्यतिरिक्तां वदन्ति। यदा पृथिवी लक्ष्या भवति तदा

पृथिव्यां लक्ष्यता नाम धर्मो विद्यते । धूमे हेतौ हेतुता नाम कश्चन धर्मोऽस्ति । एवं साध्ये वह्नौ साध्यता नाम कश्चिदस्ति धर्मः । एतेषां च धर्माणां किञ्चिद्धर्मान्तरमवच्छेदकमिति तेषां सङ्केतः ।

अवच्छेदको धर्मः प्रायेण अवच्छेद्यस्य नियामक इव भवति। अवच्छेदकधर्मो यत्र वर्तते तत्रैवावच्छेद्यस्यापि स्थितिस्सम्भवतीति तस्य नियामकत्वमथवा परिच्छायकत्वं वक्तुं शक्यते। पृथिव्यां वर्तमानाया लक्ष्यतायाः अवच्छेदकं पृथिवीत्वम् । धूमे विद्यमानाया हेतुताया धूमत्वमवच्छेदकम् । पृथिवीत्वेनावच्छिद्यमाना लक्ष्यता 'पृथिवीत्वावच्छिन्ना' इति कथ्यते । एवं धूमस्था हेतुता धूमत्वावच्छिन्ना ।

अवच्छेद्यापेक्षया न्यूनवृत्तित्वमधिकवृत्तित्वं वाऽवच्छेदकधर्मस्य नानुमन्यते । अतः पृथिवीवृत्तेर्लक्ष्यताया न्यूनवृत्ति घटत्वं अधिकवृत्ति द्रव्यत्वं वा नावच्छेदकं भवति । एतादृशावच्छेदकधर्माणां बहुधा निर्वचनोपयोगित्वं च सम्भवति । तस्यैकमुदाहरणं प्रदर्श्यते । घटाभावः, घटत्वावच्छिन्नप्रतियोगिकाभावश्च भिन्नौ भवतः । घटाभावो नाम घटप्रतियोगिकोऽभावः । कस्यचन घटस्य केवलं प्रतियोगिता तत्रापेक्ष्यते । घटत्वावच्छिन्नप्रतियोगिकाभावे तु प्रतियोगिता सर्वघटवृत्तिर्भवति । अन्यथा घटत्वस्य तदवच्छेदकत्वमेव न निर्वहेत । तथाच यस्य कस्यापि घटस्याऽसत्त्वमात्रेण घटाभाववानिति व्यवहारो जायते । सर्वस्यापि घटस्य—घटसामान्यस्य अभाव एव घटत्वावच्छिन्नप्रतियोगिकाभावस्य व्यवहारः । 'घटो नास्ति' इति ज्ञाने चास्यैव विषयत्वमिति न यत्किञ्चिद्घटाभाववति तादृशप्रतीतिरुत्पत्तिः। एवं स्थलान्तरेषु स्वयमूह्यताम् ।

हेतुतासाध्यताप्रतियोगिताकार्यताविषयताविशेष्यताप्रभृतीनां यथैव कश्चिद्धर्मोऽवच्छेदको भवति तथा कश्चन सम्बन्धोऽप्यवच्छेदकः परिगण्यते। संयोगसम्बन्धेन धूमस्य वह्न्यनुमितौ हेतुभावे सति हेतुता संयोगसम्बन्धावच्छिन्ना। एवं येन सम्बन्धेन साध्यस्य पक्षवृत्तित्वमनुमीयते तदवच्छिन्ना साध्यता। संयोगेन घटो नास्तीति व्यवहारविषयस्याभावस्य प्रतियोगिता संयोगसम्बन्धावच्छिन्ना। सम्बन्धस्याप्यवच्छेदकत्वस्वीकारेण 'संयोगेन घटो नास्ति' 'समवायेन घटो नास्ति' इति प्रतीतिविषययोरभावयोः पार्थक्यं निर्वहति।

एवंविधेषु च हेतुताप्रभृतिषु धर्मेषु यौ द्वौ परस्परं सम्बन्धिनौ भवतः, तयोस्सम्बन्धस्य निरूप्यनिरूपकभाव इति संज्ञा कृता। कार्यता कारणता, आधारता आधेयता, प्रतियोगिता अनुयोगिता, विशेष्यता विशेषणता—इत्यादिकम्यैकैकस्य द्विकस्य मिथस्सम्बन्धो निरूप्यनिरूपकभाव इति निगद्यते। तथा च तन्तुनिष्ठकारणतायाः पटनिष्ठकार्यतायाश्च निरूप्यनिरूपकभावः सम्बन्धः। अतः तन्तुनिष्ठकारणतानिरूपितकार्यतावान् पट इति शास्त्रे व्यवहारः। भूतले घटस्य विद्यमानतायां भूतलनिष्ठाधारतानिरूपिताधेयतावान् घटो भवति। घटस्याभाव इति व्यवहारे घटनिष्ठप्रतियोगितानिरूपितानुयोगितावान् अभावो भवति। भूतलं घटवदितिज्ञाने भूतलवृत्तिविशेष्यतानिरूपितविशेषणतावान् भवति घटः। एवं प्रातिलोम्येन 'पटनिष्ठकार्यतानिरूपितकारणतावान् तन्तुः' इत्यादिव्यवहारोऽपि सम्भवतीत्यवधेयम्।

निरूप्यनिरूपकभावस्य वस्तुभेदकत्वमप्युदाह्रियते। शुक्तिरजतयोः 'इमे शुक्तिरजते' इति ज्ञानस्य, शुक्तिरजतयोः 'इमे

रजतशुक्ती इति ज्ञानस्य च * परस्परं भेदः निरूप्यनिरूपकभाव-भेदादेवोपपादनीयः । प्रथमज्ञाने शुक्तित्वावच्छिन्नविशेष्यतानिरूपितशुक्तित्वनिष्ठविशेषणता रजतत्वावच्छिन्नविशेष्यतानिरूपितरजतत्वनिष्ठविशेषणता च स्तः । द्वितीयस्मिंस्तु शुक्तित्वावच्छिन्नविशेष्यतानिरूपिता विशेषणता न शुक्तित्वे, किन्तु रजतत्वे, रजतत्वावच्छिन्नविशेष्यतानिरूपिता विशेषणता च न रजतत्वे, किन्तु शुक्तित्वे इति पूर्वस्माद्भेदः । अन्यथा द्वयोरपि ज्ञानयोः शुक्तिरजते विशेष्ये, शुक्तित्वरजतत्वे च विशेषणे इति अभेद एवापद्येत ।

ययोर्वस्तुनोरेकस्मिन्नधिकरणे वर्तित्वं भवति ते समानाधिकरणे इत्युच्येते । गन्धः पृथिवीत्वं च पृथिव्यां वर्तेते इति ते समानाधिकरणे। ये वस्तुनी नैकस्मिन्नधिकरणे वर्तेते ते व्यधिकरणे । गन्धो जलत्वं च व्यधिकरणे । प्रतियोगी अभावश्च प्रायशो व्यधिकरणावेव भवतः । न हि घटवति घटाभावो विद्यते । क्वचित्तु प्रतियोग्यभावौ समानाधिकरणौ सम्भवतः । एकस्मिन्नेव वृक्षे शाखायां कपिसंयोगो मूले तदभावश्च विद्यते । एवं यस्य वस्तुनोऽभावेन सह सामानाधिकरण्यं भवति तद्वस्तु 'अव्याप्यवृत्ति' इति व्यपदिश्यते । संयोगस्सर्वोऽप्यव्याप्यवृत्तिः । आत्मनि शरीरान्तर्भागे ज्ञानमुत्पद्यते, न घटाद्यन्तर्भाग इति ज्ञानमव्याप्यवृत्ति। वृक्षे शाखायां कपिसंयोगो न मूले इत्यादिव्यवहारस्थले, शाखामूलयोः किमप्यव-

---

* इमे शुक्तिरजते रजतशुक्ती इति च ज्ञानं इदन्त्वावच्छिन्नविशेष्यतानिरूपितशुक्तित्वरजतत्वप्रकारताविशिष्टम् । तत्र प्रथमज्ञाने वस्तुतःशुक्तित्वविशेष्ये शुक्तित्वं रजतत्वविशेष्ये रजतत्वं चास्ति। द्वितीयस्मिन् तथा नास्तीति च द्योतयितुं शुक्तिरजतयो' रिति सप्तम्यन्तस्य द्विःप्रयोगः । न तु ज्ञाने सर्वोऽप्यंशोऽन्तर्भवति ।

च्छेदकत्वं स्वीक्रियते । इदं चावच्छेदकत्वं सप्तम्यन्तघोध्यं पूर्वोक्ताद्विलक्षणमेव ।

सम्बन्धास्तावद्बहुधा भवन्ति। संयोगः समवायः इत्यादिकं साक्षात्सम्बन्ध इत्युच्यते । संयुक्तसमवायः सामानाधिकरण्यमित्यादिकं परम्परासम्बन्ध इति कथ्यते । संयोगादीनां पदार्थाधिकरणत्वप्रतीतौ कारणत्वमस्ति । संयोगेन घटसत्त्वे घटवद्भूतलमिति प्रतीतिजननात् । एवमाधारत्वप्रतीतिहेतवस्सम्बन्धा वृत्तिनियामका इत्युच्यन्ते । तदहेतवस्तु जन्यजनकभावादयस्सम्बन्धा वृत्त्यनियामका भवन्ति । वृत्त्यनियामकस्य सम्बन्धस्याभावप्रतियोगितानच्छेदकत्वं नास्तीत्येके वदन्ति । तन्मते जनकतासम्बन्धावच्छिन्नघटाभावस्तन्तौ विद्यते इति व्यवहारो न प्रामाणिकः । जनकतासम्बन्धावच्छिन्नघटाभावस्थाने घटजनकत्वाभावमेव ते स्वीकुर्वन्ति ।

येन सम्बन्धेन प्रतियोगी न कुत्रापि वर्तते तादृशसम्बन्धस्य प्रतियोगितावच्छेदकत्वे व्यधिकरणसम्बन्धावच्छिन्नाभाव इति व्यवहारः । संयोगेन गुणस्याभावः, समवायेन परमाणोरभावः इत्यादिकं तदुदाहरणम् । न हि संयोगेन गुणः समवायेन परमाणुर्वा कुत्रचिद्वर्तते । तथा च तादृशाभावस्य सर्वत्र विद्यमानतया केवलान्वयित्वं वदन्तीति संक्षेपः ।

॥ अथैतदवधेहि ॥

तार्किकाः पदार्थनिर्वचने लक्षणनिर्वचने च महत्पाटवं प्रदर्शयन्ति । तेषां निर्वचनस्य पद्धतिरपि किञ्चिदिह निबद्ध्यते ।

वस्तूनां विभजनं नाम किमिति सर्वेषां यथाश्रुतग्राहिणामपि विदितमेव । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्त पदार्थाः, पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि इत्यादिकं

विभजनमिति सर्वे जानन्ति । तथापि 'विभजनं' निर्दुष्ट वक्तुं के के अंशा अपेक्ष्यन्ते ? 'विभजनं' नाम किम् ? इति प्रश्नस्योत्तरं दातुं तार्किका एव शक्नुवन्ति ।

विभजनं नाम – सामान्यधर्मव्याप्य, परस्परासमानाधिकरण सर्वधर्मप्रकारकज्ञ नजनकशब्दप्रयोगः इति तेषां निर्वचनम् । सामान्यधर्मापेक्षया न्यूनवृत्तयः, परस्परं व्यधिकरणाश्च यावन्तो विद्यन्ते धर्माः तावतां बोधाय प्रयुज्यमानं वाक्यमेव 'विभजनं' भवति । पदार्थानां विभागे पदार्थत्वं सामान्यधर्मः, द्रव्यत्वगुणत्वादयस्तद्व्याप्यधर्माः, ते च परस्परं भिन्नाधिकरणाः, सप्तैव च तादृशधर्मा विद्यन्त इति तावतां बोधकं वाक्यं विभजनं भवति । नाधिकं न वा न्यूनम् । द्रव्याणां विभागे द्रव्यत्वं सामान्यधर्मः, पृथिवीत्वादिका व्याप्यधर्माश्च भवन्ति ।

अथ लक्षणनिर्वचनम् ॥ गन्धवत्त्वं पृथिव्या लक्षणम् । तच्च समवायसम्बन्धेनेति वक्तव्यम् । अन्यथा कालस्य कालिकसम्बन्धेन सर्वाधारतया तत्रातिव्याप्तिस्स्यात् । समवायेन गन्धवत्त्वमपि क्वचिन्न सङ्घटते ; उत्पत्तिद्वितीयक्षण एव यो घटो विनश्यति, तत्र गुणानुत्पत्त्या गन्धस्याभावात् । [ उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति हि तार्किकाः. ] अतः गन्धसमानाधिकणरजातिमत्त्वं पृथिव्या लक्षणमिति कल्प्यते । गन्धसमानाधिकरणा पृथिवीत्वजातिरुत्पन्नविनष्टेऽपि वर्तत एव । एवमपि गन्धसमानाधिकरणां द्रव्यत्वजातिमादाय जलेऽतिव्याप्तिः ।

अतो जातौ द्रव्यत्वव्याप्यत्वं—द्रव्यत्वन्यूनवृत्तित्वं विशेषणं देयम् । न हि स्वस्य स्वापेक्षया न्यूनवृत्तित्वमिति स दोषः परिहृतः। तथा च गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणं पर्यवस्यति ।

व बहुमुख्यानि निर्वचनरत्नानि तार्किकग्रन्थखनिभ्यः स्वयं न्य गृह्यन्तामिति संसूचिता सरणिः ।

रामः—सखे ! तर्कशास्त्रे ज्ञातव्या विषया अनन्ता इव । तेषां सर्वेषामपि ग्रहणे धारणे च नास्ति मम पटुता । वेदान्तशास्त्र श्रमेणैव कालः क्षेप्तव्य इति संभृतोत्साहस्य मम महती तृप्तिरुदेत्ये तावद्भिरवगतैर्विषयैः । मया तत्रभवतो महान् परिश्रमस्समुत्पादित इति क्षन्तव्यमेतत् । सुचिरमहं तत्रभवति कृतज्ञो भूयासम् । कृपया स्वीक्रियतामयं मम साञ्जलिबन्धः प्रणामः ॥

श्लो॥ रामकृष्णाभिधामाजोर्मित्रयोरुभयोर्मिथः ।
संवादरूपतस्तर्कशास्त्रसारः प्रकाशितः ॥

जगद्गुर्वनन्तार्यवर्याङ्घ्रिपद्म-
द्वयीनित्यसेवैकधन्यप्रणीते ।
चतुश्शास्त्रसारामृते तर्कसारा-
ऽभिधानस्समाप्तोऽयमाद्यस्तरङ्गः ॥

अथ व्याकृतितन्त्रार्थसारसंग्रहरूपिणीम् ।
द्वितीयां लहरीं बालबोधाय विलिखानि भोः ॥

इति श्रीकाञ्ची प्रतिवादिभयङ्कराण्णङ्गराचार्य
विरचितायां
चतुश्शास्त्रसारसुधायाम्
तर्कशास्त्रसर्वस्वं नाम
प्रथमा लहरी
समाप्ता ॥

Sri Sudarsana Press. Conjeeveram.